अर्हम्

ग्रन्थाङ्क. ॥ ८ ॥

श्रीमद्धेमचन्द्राचार्यविरचितम् अपभ्रंशभाषाया-
श्छायासहितम्

# प्राकृतव्याकरणम् ।

श्रीमज्जैनाचार्यश्रीजिनकृपाचन्द्रसूरीणामुपदेशेन
मेदपुरनिवासि

## शेठ हीरालाल–ऋषभदासेन

प्रकाशितम्

श्रीमज्जैनाचार्यश्रीजिनकृपाचन्द्रसूरीणा शिष्येण
मुनिसुखसागरेण संशोधितम्

मुम्बापुर्यां
निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

प्रतयः ५००

विक्रमनृपस्य (१९७५)

अर्हम्

श्रीहेमचन्द्राचार्यविरचितम्

# प्राकृतव्याकरणम्

---

अथ प्राकृतम् ॥ १ ॥ १ ॥

अथशब्दो आनन्तर्यार्थोऽधिकारार्थश्च । प्रकृतिः सस्कृत तत्र भव तत आगत वा प्राकृत । सस्कृतानन्तर प्राकृतम् अधिक्रियते । सस्कृताऽनन्तर प्राकृतस्यानुशासन सिद्धसाध्यमानभेदसस्कृतयोनेरेव तस्य लक्षण न देश्यस्य इति ज्ञापनार्थं । सस्कृतसम तु सस्कृतलक्षणेनैव गतार्थं ॥ प्राकृते च प्रकृतिप्रत्ययलिङ्गकारक-समाससज्ञादय. सस्कृतवद् वेदितव्या. । लोकाद् इति च वर्त्तते, तेन ऋ ॠ लृ ॡ ऐ औ ङ ञ श ष विसर्जनीयप्लुतवर्ज्यो वर्णसमाम्नायो लोकाद् अवगन्तव्य· ॥ ङ-ञौ स्ववर्ग्यसयुक्तौ भवत एव ऐदौतौ च केषांचित् (कैतव) कैयव (सौन्दर्य) सौअरिय (कौरवाः) कौरवा । तथा 'अक्षर' 'व्यञ्जन' 'द्विवचन' 'चतुर्थ्या बहुवचन' च न भवति ॥

बहुलम् । १ । २ ।

बहुलम् इति 'अधिकृत वेदितव्यम्' आशास्त्रपरिसमाप्ते ।

ततश्च "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्ति' क्वचिद्विभाषा क्वचिदन्य देव 'भवति' तच्च यथा स्थान दर्शयिष्याम"

आर्षम् ॥ १ ॥ ३ ॥

ऋषीणाम् इदम् 'आर्षम्' आर्षं प्राकृत बहुल भवति । तदपि यथास्थानम् दर्शयिष्याम' । आर्षे हि सर्वे विधयो विकल्प्यन्ते ॥

## अथ स्वरसन्धि ।

लुक ॥ १ ॥ १० ॥

पूर्वस्वरस्य 'बहुल लुक् स्यात् स्वरे परे' (अदर्शनः) तिअसीसो (नि.श्वासोच्छ्वासौ) नीसासूसासो ।

आदे ॥ १ ॥ ३९ ॥

आदेरित्यधिकार' कगचजेत्यादिसूत्रात् प्राग् अविशेषेण वेदितव्य ।

त्यदाद्यव्ययात तत्स्वरस्य लुक् ॥ १ ॥ ४० ॥

त्यदादेरव्ययाच परस्य त्यदाद्यव्ययो' आदिस्वरस्य बहुल लुक् भवति । (अम्हे एत्थ) अम्हत्थ । 'जइ इमा'-जइमा, जेइ अह । जइह ।

पदादपे-र्वा ॥ १ ॥ ४१ ॥

पदात् परस्य अपेरादिस्वरस्य लुक् वा भवति ॥ 'त पि' 'तमवि' 'किं पि' 'किमवि' 'केणवि' केणावि । कहपि कहमवि ॥

१ इदम् अत्र ॥ २ यदि इयम् ॥ ३ यो, अहम् ॥ ४ इह कृति ॥ ५ [illegible]

डतेः स्वरात् तश्च द्विः ॥ १ ॥ ४२ ॥

पदात्परस्य डतेरादिस्वरस्य लुक् भवति स्वरात्परश्च तकारो द्विर्भवति ॥ किंति[1] जति । दिट्ठ ति[2] । न जुत्त[3] ति ॥ स्वरात् । तहँत्ति । झत्ति । पिओ त्ति । पुरिसो त्ति ॥ पदादित्येन । इअ विंझ-गुहानिलयाए ।

लुस यरव-शषसा 'शषसा' दीर्घः ॥ १ ॥ ४३ ॥

प्राकृतलक्षणवशात् 'लुप्ता आद्या उपर्यधो वा * यरवशषसा येषा' शषसा' तेषाम् आदिस्वरस्य दीर्घो भवति ॥ पश्यति । इति स्थिते ।

अधो मनयाम् ॥ २ ॥ ७८ ॥

सयोगान्ते वर्त्तमानानां मनया लुक् भवति (म) जुग्ग । रस्सी । सरो । सेर (न) नग्गो । लग्गो (य) कुड्ड । वाहो ॥ इति यकारस्य लुकि पूर्वेण दीर्घ । पासइ ॥ कश्यप । कासवो ॥ आवश्यक । आवासय ॥ रलोपे । विश्राम इति स्थिते ।

सर्वत्र लवराम् अवन्द्रे ॥ २ ॥ ७९ ॥

चन्द्रशब्दादन्यत्र सयुक्तस्योर्ध्वम् अधश्च सर्वत्र स्थितानां लवरां लुक् भवति ॥ ऊर्ध्व । ल । उल्का । उक्का ॥ वल्कल ॥ वक्कल ॥ (व) शब्द । सद्दो ॥ अब्द' । अद्दो । लुब्धक । लोद्धओ ।

---

१ किमिति ॥ २ दृष्टम् इति ॥ ३ न युक्तम् इति ॥ ४ तथा इति ॥ ५ मग् इति ॥ ६ प्रिय इति ॥ ७ पुरुष इति ॥ ८ इति विन्ध्यगुहानिलयाया ॥ ९ युग्म ॥ १० रश्मि ॥ ११ स्मर ॥ १२ स्मेर ॥ १३ नग्न ॥ १४ कुड्य ॥ १५ व्याध ॥

(२) अर्कः । अक्को । वर्ग. । वग्गो ( अघ ) ( श्लक्ष्ण ) सण्ह विक्लव । विक्कवो । पक्वम् । पक्क । पिक्क । ध्वस्तः । धत्थो चक्र । चक्कं । ग्रह. । गहो । रात्रि । रत्ती ॥ इत्यनेन रलोप ( विश्रामः ) वीसामो ( मिश्र ) मीसं ( संस्पर्श. ) सफासो । 'वलोपे' ( अश्व ) आसो । विश्वसिति । वीससइ । ( विश्वासः ) वीसासो । 'शलोपे' दुश्शासनः । दूसासणो । मनश्शिला । मणासिला 'षस्य यलोपे' शिष्य' । सीसो । पुष्य' । पूसो । मनुष्य. । मणूसो 'रलोपे' कर्षक । कासओ । वर्षा' । वासा । वर्ष' । वासो 'वलोपे' विष्वाण । वीसाणो । विष्वक् । वीसु 'यलोपे' निष्षिक्त. । नीसित्तो 'सस्य यलोपे' मस्य । मास । कस्यचित् । कासइ । 'रलोपे' उस्रः । ऊसो । विस्रम्भः । वीसंभो । 'वलोपे' विकस्वर' । विकासरो । निःस्व' । नीसो । 'सलोपे' निस्सह' । नीसहो ॥ न दीर्घानुस्वारात् । २।९२। इति प्रतिषेधात् । सर्वत्र अनादौ शेषादेशयोर्द्वित्वमिति प्राप्तस्य द्वित्वस्याभाव ॥

अत. समृद्ध्यादौ वा ॥ १ ॥ ४४ ॥

समृद्ध्यादिशब्देषु आदेरकारस्य दीर्घो वा भवति । समृद्धि । सामिद्धी–समिद्धी । प्रसिद्धि । पासिद्धी पसिद्धी । प्रकट । पायड–पयड । प्रतिपत् । पाडिवआ–पडिवआ । प्रसुप्त. । पासुत्तो पसुत्तो । प्रतिसिद्धि । पाडिसिद्धी–पडिसिद्धी । सदृक्ष । सारिच्छो–सरिच्छो । मनस्विन् । माणसी–मणसी । मनस्विनी । माणसिणी–मणसिणी । अभियाति । आहिआइ–अहिआइ । प्ररोह. । पारोहो–

परोहो । प्रवासिन् । पावासू–पवासू । प्रतिस्पर्द्धिन् । पाडिप्फद्धी–पडिप्फद्धी । आकृतिगणोऽयम् । तेन अस्पर्श । आफंसो । परकीय । पारकेरं–पारक । प्रवचनम् । पावयण । चतुरन्तम् चाउरत इत्यादयोऽपि भवन्ति ।

हु.खदक्षिणतीर्थे वा ॥ २ ॥ ७२ ॥

एषु संयुक्तस्य हो वा भवति इति क्षस्य हः ॥

दक्षिणे हे ॥ १ ॥ ४५ ॥

दक्षिणशब्दे आदेरस्य हेपरे दीर्घो भवति । दाहिणो । हे इति किं दक्खिणो ॥

स्वप्ने नात् ॥ २ ॥ १०८ ॥

स्वप्नशब्दे नकारात् पूर्वम् इद् आगमो भवति । स्वपिन इति जाते॥

इ स्वप्नादौ ॥ १ ॥ ४६ ॥

स्वप्नादिशब्देषु आदेरस्य इत्वं भवति ॥ सिविणो । सिमिणो । आर्षे उकारोऽपि सुमिणो । ईषद् । ईसि ( वेतसो ) वेडिसो । व्यलीक–विलिअ । मृदङ्गो । मुइगो । व्यजन–वियण । कृपण ।

---

१ 'प्रवासीक्षा इति इकारस्य दरवम् ॥ २ अत्र च, बहुषु पुस्तकेषु एक एव तकारो दृश्यते, तदशुद्धमिति, न परिभावनीय, तत्र भाव्यमान सवणान् न गृह्णातीति अभिप्रायेण केवल इशब्दात् त्वप्रत्यय ॥ अत्र तु भाव्यमानाऽपि सवणान् गृह्णातीति तपरत्वविशिष्टात् इत् शब्दान् त्वप्रत्यय तथा च तकारद्वयश्रुति, यत्र तु अत्रापि एक एव तकारस्तत्र केवलेभ्य इकारादिभ्य–स्त्वप्रत्ययो ज्ञातव्य ॥ ३ स्वप्ननीव्योवा ॥ इति पस म ॥

किविणो । उत्तम' । उत्तिमो । मरिच. । मिरिअ । दत्त-दिण्ण । बहुलाधिकारात् णत्वाभावे न भवति । दत्त । देवदत्त । इत्यादि ॥

पक्वाङ्गारललाटे वा ॥ १ ॥ ४७ ॥

एषु आदरत इत्त्व वा भवति । पिक्कं-पक्क । इगालो-अगारो ।

ललाटे च ॥ १ ॥ २५७ ॥

ललाटे च आदेर्लस्य णो भवति चकार आदेरनुवृत्त्यर्थ' । इति आदिलकारस्य ण । णलाट इति जाते ।

ललाटे लडोः ॥ २ ॥ १२३ ॥

ललाटशब्दे लकारडकारयोर्व्यत्ययो भवति वा । णिडाल-णलाड । णलाड णडाल ॥

मध्यमकतमे द्वितीयस्य ॥ १ ॥ ४८ ॥

मध्यमशब्दे कतमशब्दे च द्वितीयस्य अत इत्त्व भवति ॥ मज्झिमो । कइमो ॥

सप्तपर्णे वा ॥ १ ॥ ४९ ॥

सप्तपर्णे द्वितीयस्य अत इत्त्व वा भवति ॥

षट्शमीशावसुधासप्तपर्णेष्वादेश्छ ॥ १ ॥ २६५ ॥

एषु आदेर्वर्णस्य छो भवति । छट्ठो । छट्ठी । छप्पओ । छमुहो, छमी । छावो । छुहा । छत्तिवण्णो । छत्तवण्णो ।

मयटयइर्वा ॥ १ ॥ ५० ॥

मयटप्रत्यये आदेरतः स्थाने अइ र्वा भवति ( विषमय[१] ) विसमइओ । विसमओ ॥

---

१ साध्यमध्यमयोर्ना 'श' इति ष्यस्य स ॥

ईर्हरे वा ॥ १ ॥ ५१ ॥

हरशब्दे आदेरत ईर्वा भवति हीरो । हरो ॥

ध्वनिविष्वचोरुः ॥ १ ॥ ५२ ॥

अनयोरादेरस्य उत्त्व भवति ॥ झुणी । वीसु । कथ सुणओ । इति चेद् शुनक इति प्रकृत्यन्तरस्य, श्वन्शब्दस्य तु सा साणो इति प्रयोगौ भवतः ॥

चण्डखण्डिते णा वा ॥ १ ॥ ५३ ॥

अनयोरादेरस्य णकारेण सहितस्य उत्त्व वा भवति ॥ चुड । चड । खुडिओ । खडिओ ॥

गवये वः ॥ १ ॥ ५४ ॥

गवयशब्दे वकाराकारस्य उत्त्व भवति । गउओ । गउआ ॥

प्रथमे पथोर्वा ॥ १ ॥ ५५ ॥

प्रथमशब्दे पकारथकारयोरकारस्य युगपद् क्रमेण च उकारो वा भवति ॥ पुढुम । पढुम । पुढम । पढम ॥

ज्ञो णत्वेऽभिज्ञादौ ॥ १ ॥ ५६ ॥

अभिज्ञादिषु ज्ञस्य णत्वे कृते ज्ञस्यैव अत उत्त्व भवति ॥ अभिज्ञः ॥ अहिण्णू । सर्वज्ञः । सव्वण्णू । कृतज्ञः । कयण्णू । आगमज्ञः । आगमण्णू । णत्वे इति किं । अहिज्जो । सव्वज्जो । अभिज्ञादौ इति किं । प्राज्ञः । पण्णो । येषा ज्ञस्य णत्वे उत्त्व दृश्यते तेऽभिज्ञादय ॥

---

१ नेमिधिरेत्यादिना थस्य ढ ॥ २ ज्ञानेन इति हस्य नरम ॥

एच् छय्यादौ ॥ १ ॥ ५७ ॥

शय्यादिशब्देषु आदेरस्य एत्वं भवति । 'शय्या' 'सेज्जा' 'सुन्दरम्' 'सुंदेर' 'कन्दुक' गेंदुअ 'अत्र' 'एत्थ' 'अत्र आर्षे पुंस्कम ॥

वल्ल्युत्करपर्यान्ताश्चर्ये वा ॥ १ ॥ ५८ ॥

एषु आदेरस्य एत्व वा भवति ॥ वल्ली 'वेल्ली' 'उत्करः' 'उक्केरो' 'उक्करो' ॥

एतः पर्य्यन्ते ॥ २ ॥ ६५ ॥

पर्यन्ते एकारात्परस्य र्यस्य रो भवति ॥ पर्य्यन्त । पेरंतो 'पज्जतो'।

आश्चर्ये ॥ २ ॥ ६६ ॥

आश्चर्ये एतः परस्य र्यस्य रो भवति ॥ आश्चर्यम् 'अच्छेरं' ॥

अतो रिआर-रिज्ज-रीअ ॥ २ ॥ ६७ ॥

आश्चर्येऽकारात्परस्य र्यस्य रिअ अर रिज्ज रीअ एते आदेशा भवन्ति । अच्छरिय अच्छअर अच्छरिज्ज अच्छरीअं ॥ अत' किम् अच्छेर ॥

ब्रह्मचर्ये च ॥ १ ॥ ५९ ॥

ब्रह्मचर्ये शब्दे चस्य अत एत्व भवति । ब्रह्मचर्य बम्हचेर ॥

तोऽन्तरि ॥ १ ॥ ६० ॥

अन्तःशब्दे तस्य अत एत्व भवति 'अन्त'पुरम् । अंतेउर'

---

१ पर्यन्ते ज इति प्यम्म अतम् ॥ २ ब्रह्मचर्येत्यादिना यस्य र ॥

'अन्तआरी अतेआरी' क्वचिन्न भवति 'अन्तर्गतम् अतग्गय' (अन्तर्विश्रम्भनिवेशितानाम्) अन्तोवीसम्भनिवेसिआण ॥

ओत् पद्मे ॥ १ ॥ ६१ ॥

पद्मशब्दे आदेरत ओत्त्वं भवति ॥ '(पद्म) पोम्म' पद्म छद्म इति विश्लेषे न भवति 'पउम' ॥

नमस्कारपरस्परे द्वितीयस्य ॥ १ ॥ ६२ ॥

अनयोर्द्वितीयस्य अत ओत्त्वं भवति । (नमस्कारः) 'नमोक्कारो' (परस्पर) परोप्पर ॥

वार्पौ ॥ १ ॥ ६३ ॥

अर्पयतौ धातौ आदेरस्य ओत्त्वं वा भवति । अर्पयति ओप्पेइ अप्पेइ । ओप्पिअ अप्पिअ ॥

स्वपावुच्च ॥ १ ॥ ६४ ॥

स्वपितौ धातौ आदेरस्य ओत् उत् च भवति । सोवइ सुवइ (स्वपिति)

नात् पुनर्यादाई वा ॥ १ ॥ ६५ ॥

नञः परे पुन शब्दे आदेरस्य आइ आइ इत्यादेशौ वा भवतः॥ (न पुन.) नउणा 'नउणाइ' । पक्षे नउण नउणो ॥ केवलस्यापि दृश्यते पुणाइ ॥

वाऽलाब्वरण्ये लुक् ॥ १ ॥ ६६ ॥

अलाब्वरण्यशब्दयो. आदेरतो लुक् वा भवति । (अलाबुः)

'अलाउ लाउ लाऊ अलाऊ' 'अरण्य रण्ण अरण्ण' अत इत्येव आरण्ण कुंजरोव्व वेल्लतो ॥

चाऽव्ययोत्खातादावदातः ॥ १ ॥ ६७ ॥

अव्ययेषु उत्खातादिषु च शब्देषु आदेराकारस्य अद् वा भवति ॥ अव्यये (यथा) 'जह जहा' 'तथा तह तहा' 'अथव अहव अहवा' व वा ह हा इत्यादि ॥ उत्खातादिषु ॥ (उत्खातम्) 'उक्खय उक्खाय' (चामर') 'चमरो चामरो' 'कलओ कालओ' 'ठविओ ठाविओ' 'परिहविओ परिहाविओ' 'सठविओ सठाविओ' 'पयय पायय' 'तलविण्ट तालविण्ट' तलवोण्ट तालवोण्ट 'हलिओ हालिओ' 'नराओ नाराओ' 'वलया वलाया' 'कुमरो कुमारो' 'खइर खाइर' उत्खात चामर कालक स्थापित प्राकृत तालवृन्त हालिक नाराच वलाका कुमार खादिर इत्यादि ॥ केचिद् ब्राह्मणपूर्वाह्णयोरपि इच्छन्ति 'वम्हणो वाम्हणो' 'पुव्वण्हो पुव्वाण्हो' 'दवग्गी दावग्गी' 'चडु चाडु' इति तु शब्दभेदात् सिद्धम् ॥

घञ्वृद्धेर्वा ॥ १ ॥ ६८ ॥

घञ्निमित्तो यो वृद्धिरूप आकारस्तस्यादिभूतस्य अद् वा भवति ॥ 'पवहो पवाहो' 'पहरो पहारो' 'पयरो पयारो' (प्रचार' प्रकारो वा) 'पत्थवो पत्थावो' कचिन्न भवति 'रागः राओ' ॥

महाराष्ट्रे ॥ १ ॥ ६९ ॥

महाराष्ट्रशब्दे आदेराकारस्य अद् भवति ॥

---

१ आरण्यकुञ्जर इव रममाणः ॥ २ अत एव प्राकृतात् ह्रस्व संयोगे दीर्घ इ गोऽपि न भवति ॥

महाराष्ट्रे ह्रोः ॥ २ ॥ ११९ ॥

महाराष्ट्रशब्दे हरोर्व्यत्ययो भवति ॥ 'मरहट्ठ मरहट्ठो' ॥

मासादिष्वनुस्वारे ॥ १ ॥ ७० ॥

मासादिषु अनुस्वारे सति आदे-रात अद् भवति ॥ मस पम्हसणो कस कसिओ वसिओ पडजो ससिद्धिओ सयत्तिओ अनुस्वार इति किं मास पासु ॥ मास पासु पासन कास्य कासिक वार्सिक पाडन सासिद्धिक सायात्रिक इत्यादि ॥

श्यामाके मः ॥ १ ॥ ७१ ॥

श्यामाके मस्य आत अद् भवति ॥ शामाक इति स्थिते ॥

शषोः सः ॥ १ ॥ २६० ॥

शकारषकारयोः सो भवति ॥ सामओ ॥ सद्दो कुसो निसमो वंसो सामा सुद्ध दम सोहड विसइ (ष) सण्डो निसहो कमाओ घोसइ ॥ उभयोरपि सेसो विसेसो ॥

इ सदादौ वा ॥ १ ॥ ७२ ॥

सदादिशब्देषु आत इत्त्वं वा भवति । 'सड सया' 'निसिअरो' 'निसाअरो' 'कुप्पिसो कुप्पासो' ॥

आचार्ये चोऽच्च ॥ १ ॥ ७३ ॥

आचार्यशब्दे चस्य आत इत्त्वं अत्त्वं च भवति ॥ 'आइरिओ आयरिओ' ॥

---

१ स्याद् भव्यचैत्यचौर्यसमेष्वादिना इदागम ॥

ईः स्त्यानखल्वाटे ॥ १ ॥ ७४ ॥

स्त्यानखल्वाटयोरादे-रात ईर्भवति ॥ खल्लीडो ॥

स्त्यानचतुर्थार्थे वा ॥ २ ॥ ३३ ॥

एषु संयुक्तस्य ठो वा भवति ॥ 'ठीण थीण चउट्ठो, अट्ठो प्रयो-जनम्' अत्थो धनम् ॥

उः सास्नास्तावके ॥ १ ॥ ७५ ॥

अनयोरादे आत उत्त्वं भवति ॥ सुण्हा ॥

स्तस्य थोऽसमस्तस्तम्बे ॥ २ ॥ ४५ ॥

समस्तस्तम्बवर्जिते स्तस्य थो भवति ॥ थुवओ ॥ हत्थो । थुई थोत्त । थोअ । पत्थरो । पसत्थो । अत्थि सत्थि । असमस्तस्तम्बे इति किं । समत्तो । तम्बो ॥

ऊद् वासारे ॥ १ ॥ ७६ ॥

आसारशब्दे आदेरात ऊद् वा भवति ॥ ऊसारो आसारो ॥

आर्याया र्यः श्वश्र्वाम् ॥ १ ॥ ७७ ॥

आर्याशब्दे श्वश्रूर्वाच्यायां र्यस्य अत ऊर्भवति ॥ अज्जू ॥ श्वश्र्वामिति किम् । अज्जा ॥

एद् ग्राह्ये ॥ १ ॥ ७८ ॥

ग्राह्ये शब्दे आदेरात एद् भवति ॥ गेज्झ ॥

---

१ सूक्ष्मश्नेत्यादिना श्नस्य ण्ह आदेशः ॥ २ घयध्यत्यादिना ह्यस्य झ ॥

द्वारे वा ॥ १ ॥ ७९ ॥

द्वारशब्दे आत एद् वा भवति ॥ देर ॥ पक्षे ॥

पद्मछद्ममूर्खद्वारे वा ॥ २ ॥ ११२ ॥

एषु संयुक्तस्यान्त्यव्यञ्जनात् पूर्वम् उदागमो वा भवति ॥ दुआर दार वार पउम पोम्म छउम छम्म मुरुक्खो मुक्खो । कथं तर्हि 'नेरइओ नारइओ' नैरयिक नारकिकशब्दयोर्भविष्यति ॥ आर्षे अन्यत्रापि पच्छेकम्म[2] असहेज्ज[3] देवासुरी ॥

पारापते रो वा ॥ १ ॥ ८० ॥

पारापतशब्दे रस्थस आत एत् वा भवति ॥ पारेवओ पारावओ ॥

मात्रटि वा ॥ १ ॥ ८१ ॥

मात्रट् प्रत्यये आत एद् वा भवति ॥ एत्तिअमेत्त एत्तिअमत्त । बहुलाधिकारात् क्वचित् मात्रशब्देऽपि भोयणमेत्त ॥

उदोद् वार्द्रे ॥ १ ॥ ८२ ॥

आर्द्रशब्दे आदेरात उद् ओच्च वा भवत ॥ 'उल्ल ओल्ल' पक्षे अल्ल अद्द 'बाह सलिल पवहेण उल्लेइ' ॥

ओद् आल्यां पङ्क्तौ ॥ १ ॥ ८३ ॥

आलीशब्दे पङ्क्तिवाचिनि आत ओच्च भवति ॥ ओली ॥ पङ्क्ता-विति किम् । आली सखी ॥

---

१ अत्र पूर्वे हस्वस्त उदागम ॥ २ पश्चात्कम ॥ ३ 'असहाय्य' ॥ ४ इति शार्दां ल' इति रम्य ए ॥ ५ बाष्पसलिलप्रवाहेण आर्द्रयति ॥

ह्रस्व संयोगे ॥ १ ॥ ८४ ॥

दीर्घस्य संयोगे परे यथा दर्शनं ह्रस्वो भवति ॥

ताम्राम्रे म्ब ॥ २ ॥ ५६ ॥

अनयो॰ संयुक्तस्य मयुक्तो बो भवति । ( आम्र ) 'अम्ब' तम्ब' 'विरहाग्नि' विरहग्गी 'आस्य' अस्सं ॥ ईत् । 'मुनी मुणिंदो । 'तीर्थं' तित्थं ॥ ऊत् ॥ 'गुरूल्लापाः' गुरुल्ला 'चूर्णं' चुण्णो ॥ एत् 'नरेन्द्र' नरिन्दो 'म्लेच्छ' मिलिं 'इष्टकस्तनपृष्ट' दिट्ठिकत्थणवट्ट ॥ ओत् ॥ 'अधरोष्ठः' अह नीलोत्पल नीलुप्पल ॥ संयोगे इति किम् ॥ 'आयास' 'ई ऊसवो ॥

इत एद्वा ॥ १ ॥ ८५ ॥

संयोग इति वर्तते । संयोगे पर आदेरिकारस्य एकारो भवति ॥ पेण्ड पिण्ड ॥ धम्मेल्ल धम्मिल्ल ॥ सेन्दूर सिन्दू वेण्हू विण्हू ॥ पेट्ट पिट्ट ॥ वेल्ल विल्ल ॥ क्वचिन्न भवति । चिन्त

किंशुके वा ॥ १ ॥ ८६ ॥

किंशुकशब्दे आदेरित एकारो वा भवति ॥ केसुअ किंसुय ।

मिरायाम् ॥ १ ॥ ८७ ॥

मिराशब्दे इत एकारो भवति ॥ मेरा ॥

पथि पृथिवी प्रतिश्रुन्मूषिक–हरिद्राबिभीतकेष्वत्॥१॥८

एषु आदेरितो अकारो भवति ॥ पहो ॥

---

१ मात्रं इत्यनेन मात् पूर्वम् इदागमः ॥ २ भामहादिभि का 'अनुस्वागमः' ।

निशीथपृथिव्योर्वा ॥ १ ॥ २१६ ॥

अनयो र्थस्य ढो वा भवति ॥ निसीढो निसीहो पुहई । पुढवी । पंडसुआ । मूसओ । हलद्दी हलद्दा । बहेडओ ॥ पथ किर देसिचेति तु पथिशब्दसमानार्थस्य पन्थशब्दस्य भविष्यति । हरिद्राया विकल्प इत्यन्ये । हलिद्दी हलिद्दा ॥

शिथिलेङ्गुदे वा ॥ १ ॥ ८९ ॥

अनयोरादेरितो अत् वा भवति ॥ सढिल पसढिल । सिढिल पसिढिल ॥ अगुअ इगुअ ॥ निर्मितशब्दे तु वा आत्व न विधेय निर्मातनिर्मितशब्दाभ्यामेव सिद्धे॰ ॥

तित्तिरौ रः ॥ १ ॥ ९० ॥

तित्तिरिशब्दे रस्येतो अद् भवति । तित्तिरो ॥

इतौ तौ वाक्यादौ ॥ १ ॥ ९१ ॥

वाक्यादिभूत इतिशब्दे यस्तस्तत्सम्बन्धिन इकारस्य अकारो भवति । इअ जपिआवमाणे ॥ इअ निअसिअ-कुसुमसरो ॥ वाक्यादाविति किम् ॥ पिओ त्ति ॥ पुरिसो त्ति ॥

ईर्जिह्वा सिंह त्रिंशद् विंशतौ त्या ॥ १ ॥ ९२ ॥

जिह्वादिषु इकारस्य तिशब्देन सह ईर्भवति ॥ जीहा सीहो तीसा वीसा ॥ 'बहुलाधिकारात् क्वचिन्न भवति' सिंहदत्तो सिंहगओ ॥

---

१ पथ्यदावन्न इति अनुस्वारस्य आगम ॥ २ एतपीयूपन्ति ॥ इकारस्य ?कार ।

लुंकि निर'॥ १॥ ९३॥

निरुपसर्गस्य रेफलोपे सति इत ईकारो भवति॥ नीसरइ सासो। लुंकीति किं निण्णओ निस्सहाइ अंगाइ॥

द्विन्योरुत्॥ १॥ ९४॥

द्वि शब्दे नावुपसर्गे च इत उद् भवति (द्वि) द्विमात्र दुम (द्विजाति) दुआई। द्विविध दुविहो। द्विरेफो दुरेहो। द्विव॰ दुवयण॥ बहुलाधिकारात्। क्वचित् विकल्प॰ (द्विगुणो) दुउ विउणो (द्वितीयो दुइओ विइओ। क्वचिन्न भवति। द्वि दिओ। द्विरद दिरओ क्वचिद् ओत्वमपि दोवयण (नि) नि ज्जति णुमज्जइ। निमग्नो णुमन्नो॥ क्वचिन्न भवति निपतति नि डइ॥

प्रवासीक्षौ॥ १॥ ९५॥

अनयोरादेरित उत्व भवति। (प्रवासिक) पावासुओ (इक्षु) उच्छू॥

युधिष्ठिरे वा॥ १॥ ९६॥

युधिष्ठिरशब्दे आदेरित उत्व वा भवति॥ जहुट्ठिलो जेहिट्ठिलो

ओच्च द्विधा कृग॰॥ १॥ ९७॥

द्विधाशब्दे कृग्धातो प्रयोगे इत ओत्व चकारादुत्व भवति॥ 'दोहा किज्जइ' दुहा किज्जइ॥ दोहा इअ। 'दुहा इअ

---

१ 'हरिद्रादौ ल' इति सूत्र सत्यम्॥

कृग इति किं, दिहागय। क्वचित् केवलस्यापि 'दुहावि सो सुरव-हूसत्थो' ॥

वा निर्झरे ना ॥ १ ॥ ९८ ॥

निर्झरशब्दे नकारेण सह इत ओकारो वा भवति ॥ ओज्झरो निज्झरो ॥

हरीतक्यामीतोऽत् ॥ १ ॥ ९९ ॥

हरीतकीशब्दे आदेरीकारस्य अद् भवति ॥ हरडई ॥

आत् कश्मीरे ॥ १ ॥ १०० ॥

कश्मीरशब्दे ईत आद् भवति ॥ कम्हारा ॥

पानीयादिष्वित् ॥ १ ॥ १०१ ॥

पानीयादिषु शब्देषु ईत इद् भवति ॥ 'पाणिअ । अलिअ । जिअइ । जिअउ । विलिअ । करिसो । सिरिसो । दुइअं । तइअं । गहिरं । उवणिअं । आणिअं । पलिविअं । ओसिअन्त । पसिअ । गहिअं । वम्मिओ । तयाणिं ॥ पानीय अलीक जीवति जीवतु व्रीडित करीष शिरीष द्वितीय तृतीय गभीर उपनीत आनीत प्रदीपित अवसीदत् प्रसीद गृहीत वल्मीक तदानीमिति' पानीयादयः ॥ बहुलाधिकाराद् एषु क्वचिन्नित्यं क्वचिद् विकल्पः । तेन पाणीअं अलीअं जीअइ करीसो उवणीओ इत्यादि सिद्धम् ॥

उज्जीर्णे ॥ १ ॥ १०२ ॥

---

१ द्विधा पि स सुरवधूसार्थ ॥

जीर्णशब्दे ईत उद् भवति ॥ जुण्णसुरा ॥ क्वचिन्न भवति ॥ जिण्णे भोअणमत्ते ॥

ऊर्हीनविहीने वा ॥ १ ॥ १०३ ॥

अनयोरीत ऊत्त्व वा भवति ॥ हूणो हीणो । विहूणो विहीणो विहीन इति किं । पहीणजरमरणा ॥

तीर्थे हे ॥ १ ॥ १०४ ॥

तीर्थशब्दे हकारादेशे सति ईत ऊत्त्व भवति ॥ तूह । ह इ किं, तित्थ ॥

एत् पीयूषापीड बिभीतककीदृशेदृशे ॥ १ ॥ १०५ ॥

एषु ईत एत्त्व भवति ॥ पेऊस ।

नीपापीडे मो वा ॥ १ ॥ २३४ ॥

अनयोः पस्य मो वा भवति ॥ नीमो नीवो आमेलो आवेडो वेहेडओ केरिसो एरिसो ॥

नीडपीठे वा ॥ १ ॥ १०६ ॥

अनयोरीत एत्व वा भवति ॥ नेड नीड पेढ पीढ ॥

उतो मुकुलादिष्वत् ॥ १ ॥ १०७ ॥

मुकुलादिषु शब्देषु आदेरुतोऽत्त्व भवति ॥ मउल मउलो । मउर मउड अगरु । गरुई जहुट्ठिलो । सोअमल्ल । गलोई ॥ मुकुल मुकुर मुकुट अगुरु गुर्वी युधिष्ठिर सौकुमार्य गुडूची इति मुकुलादयः[1] ॥ क्वचिदाकारोऽपि । विद्रुत विद्दाओ ॥

[1] पधिष्ठिरशब्दस्यादिना इत्यस्य स्थलम् ॥

वोपरौ ॥ १ ॥ १०८ ॥

उपरौ उतोऽद् वा भवति ॥ अवरिं उवरिं ॥

गुरौ के वा ॥ १ ॥ १०९ ॥

गुरौ स्वार्थे के 'सति' आदेरुतोऽद् वा भवति ॥ गरुओ गुरुओ ॥ क इति किं, गुरू ॥

इर्भ्रुकुटौ ॥ १ ॥ ११० ॥

भ्रुकुटौ आदे-रुत इर्भवति ॥ भिउडी ॥

बाह्वोरात् ॥ १ ॥ ३६ ॥

बाहुशब्दस्य स्त्रियाम् आकारोऽन्तादेशो भवति, बाहाए जेण धरिओ एकाए । स्त्रियामिति किं, वामेअरो बाहू ॥

पुरुषे रोः ॥ १ ॥ १११ ॥

पुरुषशब्दे रोरुत इर्भवति ॥ पुरिसो । ( पौरुष ) पउरिस ॥

ईः क्षुते ॥ १ ॥ ११२ ॥

क्षुतशब्दे आदेरुत ईत्व भवति ॥ छीअं ॥

ऊत् सुभगमुसले वा ॥ १ ॥ ११३ ॥

अनयोरादेरुत ऊद् वा भवति ।

ऊत्वे दुर्भग-सुभगे वः ॥ १ ॥ १९२ ॥

अनयोरूत्वे सति गस्य वो भवति ॥ दूहवो सूहवो । ऊत्व इति किं, सुहओ । मूसल मुसल ॥

अनुत्साहोत्सन्ने त्सच्छे ॥ १ ॥ ११४ ॥

उत्साहोत्सन्नवर्जिते शब्दे यौ त्सच्छौ तयोः परयोरादेरुत ऊद्

भवति ॥ त्स । ( उत्सुक' ) ऊसुओ । (उत्सव.) ऊसओ (उत्सिक्त) ऊसित्तो' ( उत्सरति ) ( ऊसरइ ) च्छ ॥ उद्गताः शुका यस्मात् स ( उच्छुकः ) ऊसुओ । ( उच्छ्वसति ) ऊससइ । अनुत्साहोत्सन्ने इति किम्, उच्छाहो उच्छन्नो ॥ 'सच्छन्ना,दुरहोना' [illegible]

लुकि दुरो वा ॥ १ ॥ ११५ ॥

दुरुपसर्गस्य रेफस्य लोपे सति उत ऊत्व वा भवति ॥ ( दु'सहः ) दूसहो दुसहो । 'ऊत्वे दुर्भगसुभगे व'' इति गस्य वो । दूहवो दुहओ ॥ लुकि इति किम्, दुस्सहो विरहो ॥

ओत् संयोगे ॥ १ ॥ ११६ ॥

संयोगे परे आदेरुत ओत् भवति । ( तुण्ड ) तोण्ड ( मुण्ड ) मोण्ड ( पुष्कर ) पोक्खर ( कुट्टिम ) कोट्टिम ( पुस्तकः ) पोत्थओ ( लुब्धक ) लोद्धओ ( मुस्ता ) मोत्था । ( मुद्गरः ) मोग्गरो ( पुद्गल ) पोग्गल ( कुण्ठ' ) कोण्ठो ( कुन्त ) कोन्तो । ( व्युत्क्रांत) वोक्कंत ॥

कुतूहले वा ह्रस्वश्च ॥ १ ॥ ११७ ॥

कुतूहलशब्दे उत ओत् वा भवति तत्संनियोगे ह्रस्वश्च वा ॥ कोऊहल कोउहल्ल कुऊहल ॥

अदूतः सूक्ष्मे वा ॥ १ ॥ ११८ ॥

सूक्ष्मशब्दे ऊतोऽत् वा भवति ॥ सण्हं सुण्हं । आर्षे सुहुमं ॥

दुकूले वा लश्च द्विः ॥ १ ॥ ११९ ॥

दुकूलशब्दे ऊकारस्य अत् वा भवति, तत्सन्नियोगे च लकारो द्विर्भवति ॥ दुअल्ल दुऊल । आर्षे दुगुल्ल ॥

ईर्वोद्व्यूढे ॥ १ ॥ १२० ॥

उद्व्यूढशब्दे ऊत ईत्वं वा भवति ॥ उव्वीढ उव्वूढ ॥

उर्भ्रू-हनूमत्कण्डूयवातूले ॥ १ ॥ १२१ ॥

एषु ऊत उत्त्वं भवति । ( भ्रूसया ) भुमया ( हनूमत् ) हणुमतो ( कण्डूयति ) कण्डुअइ । ( वातूलः ) वाउलो ॥

मधूके वा ॥ १ ॥ १२२ ॥

मधूकशब्दे ऊत उद् वा भवति ॥ महुअ महूअ ॥

इदेतौ नूपुरे वा ॥ १ ॥ १२३ ॥

नूपुरशब्दे ऊत इत् एत् च वा भवत ॥ निउर नेउर । पक्षे नूउर ॥

ओत् कूष्माण्डी तूणीर-कूर्पर-स्थूल-ताम्बूल-गुडूची-मूल्ये ॥ १ ॥ १२४ ॥

एषु ऊत ओद् भवति ॥

कूष्माण्ड्या ष्मो लस्तु ण्डो वा ॥ २ ॥ ७३ ॥

कूष्माण्ड्या ष्मा इत्येतस्य हो भवति, ण्ड इत्यस्य तु वा लो भवति ॥ कोहली कोहण्डी । तोणीर कोप्पर ॥

स्थूले लो र. ॥ १ ॥ २५५ ॥

स्थूले लस्य रो भवति ॥ थोर, कथं थूलभद्दो स्थूरस्य हरिद्रादित्वे भविष्यति ॥ तंबोल । गलोई । मोल्ल ॥

भवति ॥ त्स । (उत्सुक.) ऊसुओ । (उत्सवः) ऊसओ (उत्सिक्त.) ऊसित्तो' (उत्सरति) (ऊसरइ) च्छ ॥ उद्गता' शुका यस्मात् सः (उच्छुक ) ऊसुओ । (उच्छ्वसति ) ऊससइ । अनुत्साहोत्सन्ने इति किम्, उच्छाहो उच्छन्नो ॥ 'सच्छना,छुरहोना'' उच्चा स्वास ले॰

## लुंकि दुरो वा ॥ १ ॥ ११५ ॥

दुरुपसर्गस्य रेफस्य लोपे सति उत ऊत्व वा भवति ॥ (दु सहः) दूसहो दुसहो । 'ऊत्वे दुर्भगसुभगे व' इति गस्य वो । दूहवो दुहओ ॥ लुंकि इति किम्, दुस्सहो विरहो ॥

## ओत् सयोगे ॥ १ ॥ ११६ ॥

सयोगे परे आदेरुत ओद् भवति । (तुण्ड) तोण्ड (मुण्ड) मोण्ड (पुष्कर) पोक्खर (कुट्टिम) कोट्टिम (पुस्तकः) पोत्थओ (लुब्धक ) लोद्धओ (मुस्ता) मोत्था । (मुद्गर') मोग्गरो (पुद्गल) पोग्गल (कुष्ट') कोण्ढो (कुन्तः) कोन्तो । (व्युत्क्रान्त) वोकन्त ॥

## कुतूहले वा ह्रस्वश्च ॥ १ ॥ ११७ ॥

कुतूहलशब्दे उत ओद् वा भवति तत्सनियोगे ह्रस्वश्च वा ॥ कोऊहल कोउहल्ल कुऊहल ॥

## अदूतः सूक्ष्मे वा ॥ १ ॥ ११८ ॥

सूक्ष्मशब्दे ऊतोऽद् वा भवति ॥ सण्ह सुण्ह । आर्षे सुहुम ॥

## दुकूले वा लश्च द्वि' ॥ १ ॥ ११९ ॥

दुकूलशब्दे ऊकारस्य अत् वा भवति, तत्संनियोगे च लकारो द्विर्भवति ॥ दुअल्ल दुऊल । आर्षे दुगुल्ल ॥

ईर्वोद्व्यूढे ॥ १ ॥ १२० ॥

उद्व्यूढशब्दे ऊत ईत्व वा भवति ॥ उव्वीढ उव्वूढ ॥

उर्भ्रू-हनूमत्कण्डूयवातूले ॥ १ ॥ १२१ ॥

एषु ऊत उत्व भवति । (भ्रूमया) भुमया (हनूमत्) हणुमतो (कण्डूयति) कण्डुअइ । (वातूलः) वाउलो ॥

मधूके वा ॥ १ ॥ १२२ ॥

मधूकशब्दे ऊत उद् वा भवति ॥ महुअ महूअ ॥

इदेतौ नूपुरे वा ॥ १ ॥ १२३ ॥

नूपुरशब्दे ऊत इत् एत् च वा भवत' ॥ निउर नेउर । पक्षे नूउर ॥

ओत् कूष्माण्डी तूणीर-कूर्पर-स्थूल-ताम्बूल गुडूची-मूल्ये ॥ १ ॥ १२४ ॥

एषु ऊत ओद् भवति ॥

कूष्माण्ड्या ष्मो लस्तु ण्डो वा ॥ २ ॥ ७३ ॥

कूष्माण्ड्या ष्मा इत्येतस्य हो भवति, ण्ड इत्यस्य तु वा लो भवति ॥ कोहली कोहण्डी । तोणीर कोप्पर ॥

स्थूले लो र' ॥ १ ॥ २५५ ॥

स्थूले लस्य रो भवति ॥ थोर, कथ थुलभद्दो स्थूरस्य हरिद्रादित्वे भविष्यति ॥ तंबोल । गलोई । मोल्ल ॥

स्थूणा-तृणे वा ॥ १ ॥ १२५ ॥

अनयोरूत ओत्त्वं वा भवति ॥ थोणा थूणा तोणं तूणं ॥

ऋतोऽत् ॥ १ ॥ १२६ ॥

आदे ऋकारस्य अत् भवति । (घृत) घय (तृण) तण (कृत) कय (वृषभ) वसहो (मृगः) मओ (घृष्टः) घट्ठो ॥ द्विधा कृतमिति कृपादिषु पाठात् दुहाइअं ॥

आत् कृशामृदुकमृदुत्वे वा ॥ १ ॥ १२७ ॥

एषु आदेॠत आद् वा भवति । कासा किसा । माउक्कं मउअं । माउक्कं मउत्तणं ॥

इत् कृपादौ ॥ १ ॥ १२८ ॥

कृपादिषु शब्देषु आदेॠत इत्त्वं भवति ॥ किवा हियय 'मिट्ठ रसे एव' अन्यत्र मट्ठ, दिट्ठ दिट्ठी, सिट्ठ सिट्ठी, गिंठी, पिच्छी, भिऊ, भिंगो, भिंगारो, सिंगारो, सिआलो, घिणा, घुसिण, विद्धकई, समिद्धी, इद्धी गिद्धी, किसो, किसाणू, किसरा, किच्छ, तिप्प, किसिओ, निवो, किच्चा, किई, घिई, किवो किविणो किवाण विञ्चुओ वित्त वित्ती हिअ वाहित्त बिंहिओ निसी इसी विइण्हो छिहा सइ उक्किट्ठ निससो । क्वचिन्न भवति रिद्धी ॥ कृपा हृदय मृष्ट दृष्ट दृष्टि सृष्ट सृष्टि गृष्टि पृथ्वी भृगु भृङ्ग भृङ्गार शृङ्गार शृगाल घृणा घुसृण वृद्धकवि समृद्धि ऋद्धि गृद्धि कृश कृशानु कृसरा कृच्छ्र तृप्त कृषित नृप कृत्या कृति धृति कृप कृपण

---

१ सेवादौ वा, इति कस्य द्वित्वम् ॥ २ वकारागमन्त इति अनुस्वारागम ॥

कृपाण वृश्चिक वृत्त वृत्ति हृत व्याहृत बृंहित बृसी ऋषि वितृष्ण-स्पृहा सकृत् उत्कृष्ट नृशंस इति कृपादय. ॥

पृष्ठे वानुत्तरपदे ॥ १ ॥ १२९ ॥

पृष्ठशब्देऽनुत्तरपदे ऋत इद् वा भवति ॥ पिट्ठी पट्ठी पिट्ठि परिट्ठविअ ॥ अनुत्तरपदे इति किं, महिवट्ठ ॥

मसृण मृगाङ्क-मृत्यु-शृङ्ग धृष्टे वा ॥ १ ॥ १३० ॥

एषु ऋत इद् वा भवति । मसिण मसण मिअङ्को मयङ्को मिच्चू मच्चू सिंग सग धिट्ठो धट्ठो ॥

उद् ऋत्वादौ ॥ १ ॥ १३१ ॥

ऋतु इत्यादिषु शब्देषु आदे ऋत उद् भवति ॥ उऊ परामुट्ठो पुट्ठो पउट्ठो पुहई पउत्ती पाउसो पाउओ भुई पहुडी पाहुड पर-हुओ निहुअ निउअ विउअ सवुअ वुत्तन्तो निव्वुअ निव्वुई वुन्द वुन्दावणो वुड्ढो वुड्ढी उसहो मुणाल उज्जू जामाउओ माउओ माउआ भाउओ पिउओ पुहुवी ॥ ऋतु परामृष्ट स्पृष्ट प्रवृष्ट पृथिवी प्रवृत्ति प्रावृष् प्रावृत भृति प्रभृति प्राभृत परभृत निभृत निवृत विवृत संवृत वृत्तान्त निर्वृत निर्वृति वृन्द वृन्दावन वृद्ध वृद्धि ऋषभ मृणाल ऋजु जामातृक मातृक मातृका भ्रातृक पितृक पृथ्वी इत्यादि ॥

निवृत्तवृन्दारके वा ॥ १ ॥ १३२ ॥

अनयोर्ऋत उद् वा भवति ॥ निवुत्त निअत्त वुन्दारया वन्दारया ॥

---

१ पृष्ठमनिष्ठापितम् ॥ २ दग्ध विदग्धवृद्धिवृद्धे ढ " इति दग्ध ढ ॥

वृषभे वा वा ॥ १ ॥ १३३ ॥

वृषभे ऋतो वेन सह उद् वा भवति ॥ उसहो वसहो ॥

गौणान्त्यस्य ॥ १ ॥ १३४ ॥

गौणशब्दस्य योऽन्त्य ऋत् तस्य उद् भवति । माउ-मडल माउहर, पिउहर । माउसिआ, पिउसिआ, पिउवण, पिउवई ॥

मातुरिद् वा ॥ १ ॥ १३५ ॥

मातृशब्दस्य गौणस्य ऋत इद् वा भवति ॥ माइहर, माउहर क्वचिद्गौणस्यापि माईण ॥

उदूदोत् मृषि ॥ १ ॥ १३६ ॥

मृषाशब्दे ऋत उत् ऊत् ओच्च भवन्ति । मुसा मूसा मोसा मुसावाओ मूसावाओ मोसावाओ ॥

इदुतौ वृष्ट-वृष्टि-पृथङ्-मृदङ्ग-नप्तृके ॥ १ ॥ १३७ ॥

एषु ऋत इकारोकारौ भवतः, विट्ठो वुट्ठो, विट्ठी वुट्ठी, पिह पुह, मिइंगो मुइंगो नत्तिओ नत्तुओ ॥

वा बृहस्पतौ ॥ १ ॥ १३८ ॥

बृहस्पतिशब्दे ऋत इदुतौ वा भवतः ॥

ष्पस्पयो: फ: ॥ २ ॥ ५३ ॥

ष्पस्पयो[1] फो भवति ॥ निहप्फई वुहप्फई वहप्फई । (पुष्प) पुप्फ (शष्प) सप्फ (निष्पेष) निप्फेसो (निष्पाप[3]) नि-

१ तृतीयान्तपदम् ॥ २ गृहस्य घरपतौ ॥ इति गृहस्य घरादेश ॥ ३ ह स्य मादौ ॥ इति हस्य ह ॥

फाखो ॥ ( स्पन्दन ) फन्दण ( प्रतिस्पर्द्धिन् ) पाडिप्फद्धी ॥ बहु-
ाधिकारात् क्वचिद् विकल्प' । बुहुप्फई बुहप्पई । क्वचिन्न भवति
( निष्प्रभ. ) निप्पहो णिप्पुसण परोप्पर ॥

इदेदोद् वृन्ते ॥ १ ॥ १३९ ॥

वृन्तशब्दे ऋत इत् एत् ओत् च भवन्ति ।

वृन्ते ण्टः ॥ २ ॥ ३१ ॥

वृन्ते सयुक्तस्य ण्टो भवति । विण्ट वेण्ट वोण्ट । तालवेण्ट ॥ ·ॆंजणो

रि॰ केवलस्य ॥ १ ॥ १४० ॥

केवलस्य व्यञ्जनेन असयुक्तस्य ऋत रिरादेशो भवति । रिद्धी ।
रिच्छो ॥

ऋणर्ज्वृषभर्त्वृषौ वा ॥ १ ॥ १४१ ॥

ऋण ऋजु ऋषभ ऋतु ऋषिपु ऋतो रिर्वा भवति ॥ रिण अण॥
रिजू उज्जू ॥ रिसहो उसहो ॥ रिऊ उऊ ॥ रिसी इसी ॥

दृशे क्विप्टक्सकः ॥ १ ॥ १४२ ॥

क्विप् टक् सक् इत्येतदन्तस्य दृशेर्धातोर्ऋतो रिरादेशो भवति ।
( सदृग्वर्णः ) सरिवण्णो सरिरूवो सरिबदीण । (सदृश') सरिसो ।
( सदृक्षः ) सरिच्छो ॥ एव एआरिसो । भवारिसो । जारिसो ।
तारिसो । केरिसो । एरिसो । अन्नारिसो । अम्हारिसो । तुम्हा-
रिसो ॥ टक् सक् साहचर्यात् त्यदाद्यन्यादिसूत्रविहित क्विन्निह
गृह्यते ॥

आदृते ढि' ॥ १ ॥ १४३ ॥

आदृतशब्दे ऋतो ढिरादेशो भवति । आढिओ ॥

अरिर्दृप्ते ॥ १ ॥ १४४ ॥

दृप्तशब्दे ऋतोऽरिरादेशो भवति ॥ दरिओ दरिअसीहेण ॥

लृत इलिः कॢप्त-कॢन्ने ॥ १ ॥ १४५ ॥

अनयोर्लृत इलिरादेशो भवति । किलिन्न-कुसुमोवयारेसु धाराकिलित्तवत्तं ॥

एत इद् वा वेदना चपेटा देवर केसरे ॥ १ ॥ १४६ ॥

वेदनादिषु एत इत्त्व वा भवति । विअणा वेअणा, चविडा चवेडा 'विअडचवेडाविणोआ' दिअरो देवरो । मह-महिय दसणकिसर, केसर ॥ महिला महेला इति तु महिला-महेला शब्दाभ्यां सिद्धम् ॥

ऊः स्तेने वा ॥ १ ॥ १४७ ॥

स्तेने एत ऊद् वा भवति । थूणो थेणो ॥

ऐत एत् ॥ १ ॥ १४८ ॥

आदौ वर्तमानस्य ऐकारस्य एत्त्व भवति । (शैलाः) सेला (सैन्य) सेन्न (त्रैलोक्य) तेलुक । (ऐरावण.) एरावणो (कैलाश) केलासो (वैद्यो) वेज्जो (कैटभः) केढवो । (वैधव्य) वेहव्व ॥

इत् सैन्धवशनैश्चरे ॥ १ ॥ १४९ ॥

---

१ क्लृप्तकुसुमोपचारेषु ॥ २ धाराक्लृप्तवर्त्म ॥ ३ विकटचपेटाविनोद ॥ ४ महमहितदशनकेसरम् ॥

एतयोरैत इत्त्व भवति । सिंधव सणिच्छरो ॥

सैन्ये वा ॥ १ ॥ १५० ॥

सैन्यशब्दे ऐत इद् वा भवति । सिन्न सेन्न ॥

अइ दैत्यादौ च ॥ १ ॥ १५१ ॥

सैन्यशब्दे दैत्यादिषु च ऐतो अइ इत्यादेशो भवति ॥ एत्त्वापवादः ॥ सइन्न, दइच्चो । दइन्न । (ऐश्वर्यम्) अइ-सरिअ । भइरवो । वइजवणो । दइवयं । वइआलीअ । वइएमो । वइएहो । वइदब्भो । वइस्साणरो । कइअव । वइसाहो । वइसालो । सइर । चइत्त ॥ दैत्य दैन्य ऐश्वर्य भैरव वैजवन दैवत वैतालीय वैदेश वैदेह वैदर्भ वैश्वानर कैतव वैशाख वैशाल स्वैर चैत्य इत्यादि । विश्लेषे न भवति (चैत्य) चेइअ । आर्षे (चैत्यवन्दनम्) चीवन्दण॥

वैरादौ वा ॥ १ ॥ १५२ ॥

वैरादिषु ऐत अइरादेशो वा भवति । (वैर) वइर वेर । कइलासो केलासो । कइरव केरव । वइसवणो वेसवणो । वइसम्पायणो वेसम्पायणो । वइआलिओ, वेआलिओ । वइसिअ वेसिअ । चइत्तो चेत्तो ॥ वैर कैलाश कैरव वैश्रवण वैशम्पायन वैतालिक वैशिक चैत्र । इत्यादि ॥

एच्च दैवे ॥ १ ॥ १५३ ॥

दैवशब्दे ऐत एत् अइश्च आदेशो भवति । देव्व दइव्व दइव ॥

उच्चैर्नीचै-स्यअः ॥ १ ॥ १५४ ॥

अनयोरैत अअ इत्यादेशो भवति । उच्चअ नीचअ ॥ उच्चनं चाभ्या के सिद्धं । उच्चैर्नीचैसोस्तु रूपान्तरनिवृत्त्यर्थं वचनम् ॥

ईद् धैर्ये ॥ १ ॥ १५५ ॥

धैर्यशब्दे ऐत ईद् भवति । धीर हरइ विसाओ ॥ (धैर्यं हर्रा विषादः) ॥

ओतो ऽद् वा ऽन्योन्यप्रकोष्ठातोद्य शिरोवेदना-

मनोहर-सरोरुहे क्तोश्च वः ॥ १ ॥ १५६ ॥

एषु ओतो ऽत्व वा भवति, तत्सनियोगे च यथासम्भव क कारतकारयो-र्वादेशो भवति ॥ अन्नन्न । अन्नुन्न । पवट्ठो । पउट्ठो आवज्ज । आउज्ज । सिर-वियणा सिरो-विअणा । मणहर मणो हर । सररुह सरोरुह ॥

ऊत् सोच्छ्वासे ॥ १ ॥ १५७ ॥

सोच्छ्वासशब्दे ओत ऊद् भवति ॥ (सोच्छ्वासः) सूसासो ॥

गव्यउ-आअ. ॥ १ ॥ १५८ ॥

गोशब्दे ओत अउ आअ इत्यादेशौ भवत । गउओ गउआ गाओ । हरस्स एसा गाई ॥ गाव्य

औत ओत् ॥ १ ॥ १५९ ॥

औकारस्यादे रोद् भवति । (कौमुदी) कोमुई (यौवन) जोव्वण । (कौस्तुभ) कोत्थुहो (कौशाम्बी) कोसम्बी (क्रौञ्च) कोंचो (कौशिक.) कोसिओ ॥

उत् सौन्दर्यादौ ॥ १ ॥ १६० ॥

सौन्दर्यादौ औत उद् भवति । सुन्देरं सुन्दरिअं । मुञ्जायणो । सुण्डो । सुद्धोअणी । दुवारिओ । सुगन्धत्तणं । पुलोमी । सुवण्णिओ ॥ सौन्दर्य मौञ्जायन शौण्ड शौद्धोदनी दौवारिक सौगन्ध्य पौलोमी सौवर्णिक. ॥

**कौक्षेयके वा ॥ १ ॥ १६१ ॥**

कौक्षेयकशब्दे औत उद् वा भवति ॥ कुच्छेअयं, कोच्छेअयं ॥

**अउः पौरादौ च ॥ १ ॥ १६२ ॥**

कौक्षयके पौरादिषु च औत अउरादेशो भवति । कउच्छेअयं (पौर.) पउरो पउर-जणो (कौरव) कउरवो (कौशल) कउसलं (पौरुष) पउरिसं (सौध) सउहं (गौडो) गउडो (मौलि.) मउली (मौन-) मउणं (सौरा) सउरा (कौलाः) कउला ॥

**आच गौरवे ॥ १ ॥ १६३ ॥**

गौरवशब्दे औत आत्वम् अउश्च भवति । गारवं गउरवं ॥

**नाव्याव: ॥ १ ॥ १६४ ॥**

नौशब्दे औत आवादेशो भवति । नावा ॥

**एत् त्रयोदशादौ स्वरस्य सस्वरव्यञ्जनेन ॥ १ ॥ १६५ ॥**

त्रयोदश इत्येवं प्रकारेषु संख्याशब्देषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एत् भवति ॥ तेरह[1] । तेवीसा । तेतीसा ॥

**स्थविरविचकिलायस्कारे ॥ १ ॥ १६६ ॥**

एषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एत् भवति ॥

१ ह्रस्वोपलक्षणत्वात् 'ह्रस्य द्विमोत्सर्गा वा' इति यस्यापि सण । २ संख्या गद्गदादे र इति दस र । ३ दशपाषाणयोर्ह इति शस्य ह ।

थेरो । वेइल्लं । मुद्ध-विअइल्ल-पसूण पुञ्जा ( मूर्द्धविचकिलप्रसून पुञ्जा ) इत्यपि दृश्यते । एकारो ॥

वा कदले ॥ १ ॥ १६७ ॥

कदलशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एद् वा भवति ॥ केल कयल । केली कयली ॥ केलाका घर

वेत कर्णिकारे ॥ १ ॥ १६८ ॥

कर्णिकारे इतः परेण सस्वरव्यञ्जनेन सह एद् वा भवति ॥ कण्णेरो कण्णिआरो ॥

अयौ वैत् ॥ १ ॥ १६९ ॥

अयिशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ऐत् वा भवति ॥ ऐ[1] बीहेमि । अइ[2] उम्मत्तिए । वचनाद् ऐकारस्यापि प्राकृते प्रयोग ॥

ओत् पुतर-बदर-नवमालिका-नवफलिका-पूग-फले ॥ १ ॥ १७० ॥

पुतरादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओत् भवति ॥ पोरो, बोर बोरी, नोमालिआ । नोहलिआ । पोप्फलं । पोप्फली ॥

न वा मयूख-लवण-चतुर्गुण-चतुर्थ-चतुर्दश-चतुर्वार-सुकुमार-कुतूहलोदूखलोलूखले ॥ १ ॥ १७१ ॥

मयूखादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा

---

1 अयि बिभेमि । 2 अयि उन्मत्तिके ।

भवति ॥ मोहो मऊहो । लोण । ईअ लवणुग्गमा । चोग्गुणो चउग्गुणो । चोत्थो चउत्थो । चोत्थी चउत्थी । चोद्दह चउद्दह । चोद्दसी चउद्दसी । चोव्वारो चउव्वारो । सोमालो सुकुमालो । कोहल कोउहल्ल । तेह मन्ने कोहलीए । ओहलो उऊहलो । ओक्खल उलूहल ॥ मोरो मऊरो । इति तु मोरमयूरशब्दाभ्या सिद्धम् ॥

अवापोते च ॥ १ ॥ १७२ ॥

अवापयो-रुपसर्गयोरुत इति विकल्पार्थनिपाते च आदे[1] स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति ॥ (अव) (अवतरति) ओअरइ । अवयरइ (अवकाशः) ओआसो अवयासो ॥ अप (अपसरति) ओसरइ अवसरइ । (अपसारित) ओसारिअं अवसारिअ ॥उत (उतवनम्) ओवण उअवण । (उत घनः) ओघणो उअघणो ॥ क्वचिन्न भवति (अवगतम्) अवगय (अपशब्द) अवसद्दो (उतरवि.) उअरवी ॥

ऊच् चोपे ॥ १ ॥ १७३ ॥

उपशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ऊत् ओत् चादेशौ वा भवतः ॥ (उपहसितम्) ऊहसिअ ओहसिअ उवहसिअ (उपाध्याय) ऊज्झाओ ओज्झाओ उवज्झाओ । (उपवास) ऊआसो ओआसो उववासो ॥

उमो निषण्णे ॥ १ ॥ १७४ ॥

---

१ इति एषणोद्गमा । २ तथा मन्ये कुतूहलेन ।

निषण्णशब्दे आदे' स्वरस्य परेण सस्वरव्यञ्जनेन सह उम आदेशो वा भवति । णुमण्णो णिमण्णो ॥

प्रावरणे अङ्ग्वाऊ ॥ १ ॥ १७५ ॥

प्रावरणशब्दे आदे' स्वरस्य परेण सस्वरव्यञ्जनेन सह अङ्गु आउ इत्यादेशौ वा भवतः ॥ पगुरण पाउरण पावरण ॥

निष्प्रती ओत्परी माल्यस्थोर्वा ॥ १ ॥ ३८ ॥

निर्प्रति इत्येतौ माल्यशब्दे स्थाधातौ च परे यथा सख्यम् ओत्परि इत्येव रूपौ वा भवतः । अभेदनिर्देशः सर्वादेशार्थः । ओमाल निम्मल्ल । ओमालय वहइ । (प्रतिष्ठा) परिट्ठा पइट्ठा । परिट्ठिय पइट्ठिअ ॥

दीर्घह्रस्वौ मिथो वृत्तौ ॥ १ ॥ ४ ॥

वृत्तौ समासे स्वराणां दीर्घह्रस्वौ बहुलं भवतः । मिथः परस्परं तत्र ह्रस्वस्य दीर्घः । (अन्तर्वेदि) अन्तावेई (सप्तविंशति) सत्तावीसा । क्वचिन्न भवति जुवइजणो ॥ क्वचिद् विकल्पः ॥ वारीमई वारिमई भुजयन्त्र भुआयन्त भुअयंत । (प्रतिगृहं) पईहर पइहर । (वेणुवन) वेलूवण वेलुवण ॥ दीर्घस्य ह्रस्वः (नितम्बशिलास्खलितवीचिमालस्य) निअवमिलखलिअ वीइमालस्स ॥ क्वचिद् विकल्पः । (यमुनातट) जउँणअड जउँणाअड ॥ नइसोत्त नईसोत्त ॥ गोरिहर गोरीहर । वहुमुह वहूमुह । इति स्वरसन्धिप्रकरणम् ॥

---

१ निमाल्यक वदति । २ वेणौ णो वा, इति णस्य लः ।

## अथ प्रकृतिभावः ।

### पदयोः सन्धिर्वा ॥ १ ॥ ५ ॥

सस्कृतोक्तः सन्धिः सर्वः प्राकृते पदयोर्व्यवस्थितविभाषया भवति ॥ ( व्यासऋषिः ) वासइसी वासेसी । ( विषमातपः ) विसमायवो । विसमआयवो ( दधीश्वरः ) दहिईसरो दहीसरो । ( स्वादूदक ) साउउअय साऊअयं ॥ पदयोरिति किं ॥ ( पातः ) पाओ ( पति॰ ) पई ( वृक्षात् ) वच्छाओ । ( मुग्धया ) मुद्धाइ मुद्धाए । ( काक्ष्या ) महइ महए । बहुलाधिकारात् क्वचिद् एकपदेऽपि, ( भविष्यति ) काहिइ, काही । विइओ, बीओ ॥

### न युवर्णस्याऽस्वे ॥ १ ॥ ६ ॥

इवर्णस्य उवर्णस्य चास्वे वर्णे परे सन्धिर्न भवति । ( न वैरिवर्गेऽपि अवकाशः ) न वेरिवग्गे विं अवआसो ( वन्दामि आर्यवैर ) वदामि अज्जवइर ॥

दणु इदरुहिरलित्तो सहइ उइंदो नहप्पहावलि अरुणो
सज्झावहु अवऊढो नववारिहरोव्व विज्जुलापडिभिन्नो ॥

युवर्णस्येति किं गूढो–अरतामरसाणुसारिणी भमरपतिव्व ॥ अस्व इति किं ( पृथिवीश॰ ) पुहवीसो ।

---

१ अत्र वि इत्यस्य अवकाशे परतः सन्धिर्न जात । २ दनुजेन्द्ररुधिरलिप्त शोभते उपेन्द्र नखप्रभावल्यरुण संध्यावध्ववगूढो नववारिधर इव विद्युत्प्रतिभिन्न ॥ अत्र दणु इत्यादीनां सन्धिन जात । ३ गूढोदरतामरसानुसारिणी भ्रमरपङ्क्तिरिव ॥ अत्र गूढ उदर इत्यादिषु सन्धिभवत्येन ।

## एदोतोः स्वरे ॥ १ ॥ ७ ॥

एकारौकारयोः स्वरे परे सन्धिर्न भवति,
वहुआए नहुल्लिहणे आवधंतीइ कचुअं अंगे ॥
मय रद्धअसरघोरणि घाराच्छेअव्व दीसन्ति ॥ १ ॥
उवमासु अपज्जत्तेभकलभदंता–वहासमूरु जुअ ॥
तं चेअ मलिअविसदण्ड–विरसं आलक्खिमो एण्हिं॥
अहो अच्छरिअ ॥ एदोतोरिति किं ॥
अत्थालोअणतरला इयरकईण भमति वुद्धीओ ॥
अत्थ चिअ निरारम्भमिंति हियय कइदाण ॥

## स्वरस्योद्वृत्ते ॥ १ ॥ ८ ॥

व्यञ्जनसपृक्तः स्वरो व्यञ्जने लुप्ते योऽवशिष्यते स उद्
इहोच्यते । उद्वृते स्वरे परे स्वरस्य सन्धिर्न भवति । गैयणे चि
गधउडिं कुणति तुह कउलनारीओ ॥ निसाअरो निसिअरो । र
णिअरो । मणुअत्त, बहुलाधिकारात् कचित् विकल्पः । कुमआ

---

१ वधूकाया नखोल्लेखने आवध्नन्त्याः कञ्चुकमङ्गे ॥
मकरध्वजशरघोरणि धाराच्छेदा इव दृश्यन्ते ॥
अत्र नखोल्लेखने इति एकारस्य आवध्नन्त्या इति परे सन्धिर्न भवति ।

२ उपमासु अपर्याप्तेभकलभदन्तावभासं ऊरुयुगम्, तदेव मर्दितविसदण्डविरस आलक्ष्याम इदानीम् ॥ अत्र मो इति ओकारस्य सन्धिर्न भवति ॥ ३ अहो आश्चर्यम् ४ अर्थालोकनतरला इतरकवीनां भ्रमति बुद्धयः । अत्र चिअ निरारम्भा यन्ति हृद कवीन्द्राणाम् ॥ अत्र कवि इन्द्र इत्यत्र सन्धिरभवस्येव । ५ गगने एव गन्धपु भ्रमंति राव कौरनार्यं ॥ अत्र गन्ध उडिमिति इत्यत्र अकार उद्वृत्तस्वर नास्मि परे सन्धिन ।

कुमारो । सुपुरिसो सूरिसो । क्वचित्सन्धि-रेव सालाहणो[1] चक्काओ[2] ॥ अत एव प्रतिषेधात् समासेऽपि स्वरस्य सन्धौ भिन्नपदत्वम् ॥

त्यादेः ॥ १ ॥ ९ ॥

त्यादीना स्वरस्य स्वरे परे सन्धिर्न भवति ॥ भवति इह, होइ इह ॥

---

## अथ व्यञ्जनसन्धि.

अन्त्यव्यञ्जनस्य ॥ १ ॥ ११ ॥

लुगित्यनुवर्त्तते ॥ शब्दाना यद् अन्त्यव्यञ्जन तस्य लुक् भवति॥ जाव (यावत्) ताव (तावत्) जसो (यशस्) तमो जम्मो । समासे तु वाक्य[3]विभक्त्यपेक्षायाम् अन्त्यत्वम् अनन्तत्व च, तेनोभयमपि भवति ( सद्भिक्षुः ) सभिक्खू ( सज्जनः ) सजणो ( एतद्गुणाः ) एअगुणा ( तद्गुणाः ) तग्गुणाः ॥

न श्रदुदोः ॥ १ ॥ १२ ॥

श्रद् उद् इत्येतयोरन्त्यव्यञ्जनस्य लुग् न भवति, सद्दहिअं, सद्धा उग्गय उन्नय ॥

निर्दुरोर्वा ॥ १ ॥ १३ ॥

निर् दुर् इत्येतयोरन्त्यव्यञ्जनस्य लुग् वा न भवति ॥ निस्सहं नीसह । दुस्सहो दूसहो ( दुस्सह॰ ) दुक्खिओ दुहिओ ॥

---

१ शालवाहन । २ चक्रवाक । ३ वाक्यापेक्षया अनन्तत्व, विभक्त्यपेक्षया च अन्त्यत्वम् इति ।

स्वरेऽन्तरश्च ॥ १ ॥ १४ ॥

अन्तरो निर्दुरोश्चान्त्यव्यञ्जनस्य स्वरे परे लुग् न भवति । अव
रेप्पा ( अन्तरात्मा ) निरतर, निरवसेसं, दुरुत्तर दुरवगाह । क्वचि
भवत्यपि अन्तोवेरि ॥

स्त्रियाम् आदू अविद्युतः ॥ १ ॥ १५ ॥

स्त्रियां वर्त्तमानस्य शब्दस्य अन्त्यव्यञ्जनस्य आत्त्व भवति, विद्यु
च्छब्द वर्जयित्वा। लुगपवाद. ॥ ( सरित् ) सरिआ ( प्रतिपद् )
पाडिवआ ( सम्पद् ) सपआ, बहुलाधिकारात् ईषत्स्पृष्टतरयश्रुति
रपि । सरिया, पाडिवया, सपया । अविद्युत इति किंविज्जु ॥

रो रा ॥ १ ॥ १६ ॥

स्त्रियां वर्त्तमानस्य अन्त्यरेफस्य रा इत्यादेशो भवति आत्त्वाप
वादः । गिरा पुरा धुरा ॥

क्षुधो हा ॥ १ ॥ १७ ॥

क्षुध् शब्दस्य अन्त्यव्यञ्जनस्य हादेशो भवति । छुहा ॥

शरदादे-रत् ॥ १ ॥ १८ ॥

शरदादे-रन्त्यव्यञ्जनस्य अद् भवति ( शरद् ) सरओ ( भिषर
भिसओ ॥

दिक्प्रावृषोः सः ॥ १ ॥ १९ ॥

एतयोरन्त्यव्यञ्जनस्य सो भवति । दिसा पाउसो ॥

---

१ 'भस्मात्मनो पोवा ।२।५२ इती त्मस्य प ॥ २ रस्य मिरार्गे कृते 'भतो
विसगस्स' इति विसगस्थाने ओदोत्कार ॥

आयुरप्सरसोर्वा ॥ १ ॥ २० ॥

अनयोरन्त्यव्यञ्जनस्य सो वा भवति ॥ दीहाउसो दीहाऊ, अच्छरसा अच्छरा ॥

ककुभो हः ॥ १ ॥ २१ ॥

ककुभ् शब्दस्य अन्त्यव्यञ्जनस्य हो भवति । कउहा ॥ दिशो

धनुषो वा ॥ १ ॥ २२ ॥

धनुःशब्दस्य अन्त्यव्यञ्जनस्य हो वा भवति, धणुह धणू ॥

मोऽनुस्वारः ॥ १ ॥ २३ ॥

अन्त्यमकारस्य अनुस्वारो भवति । जल फल वच्छं गिरिं पेच्छ । क्वचिदनन्त्यस्यापि वणमि वणम्मि ॥

वा स्वरे मश्च ॥ १ ॥ २४ ॥

अन्त्यमकारस्य स्वरे परेऽनुस्वारो वा भवति । पक्षे लुगपवादो मस्य मकारश्च भवति । वंदे उसभं अजिअं, उसभमजिअं च वंदे ॥ बहुलाधिकाराद् अन्त्यस्यापि व्यञ्जनस्य मकारः (साक्षात्) सक्खं (यत्) जं (तत्) तं (विष्वक्) वीसुं[4] (पृथक्) पिहं (सम्यक्) सम्मं (इह) इहं (इहक) इहयं आलेठ्ठुअं इत्यादि ॥ ह्रु

ङञणनो व्यञ्जने ॥ १ ॥ २५ ॥

ङञणन इत्येषां स्थाने व्यञ्जने परेऽनुस्वारो भवति । ङ (पङ्क्तिः) पंती (पराङ्मुखः) परंमुहो (ञ) कञ्चुकः) कंचुओ

१ ष्टस्याद् ष्य-ष्व-स्स ष्पाम् अनिष्ठे इति प्सस्य छ ॥ २ वृक्ष ॥ ३ 'षाऽव्य योरसातादावदाश इति आ द्रस्य क्ष ॥ ४ ष्यनिविष्वचोव ॥ १ ॥ ५२ ॥' इति अकारस्य उत्वम् ॥

( लाञ्छन ) लछण ( ण ) ( षण्मुखः ) छमुहो ( उत्कण्ठा ) उक्क
( न ) ( सन्ध्या ) संझा ( विन्ध्यः ) विंझो ॥

वक्रादावन्तः ॥ १ ॥ २६ ॥

वक्रादिषु यथादर्शन प्रथमादेः स्वरस्यान्त आगमरूपोऽनुस्वा
भवति ॥ वक । तस । अस्सू । मस्सू । पुछ । गुंछ । मुढा । पस्सू
वुध । कक्कोडो कुंपल दंसण विंछिओ गिंठी मजारो, एष्वाद्यस्य
वयसो मणसी मणंसिणी । मणसिला । पंडसुआ । एषु द्विती
यस्य ॥ अवरिं अणिउतय अइमुतय अनयोस्तृतीयस्य, वक्र त्र्यस्र
अश्रु श्मश्रु पुच्छ गुच्छ मूर्धन् पर्शु बुध्न कर्कोट कुड्मल दर्श
वृश्चिक गृष्टि मार्जार वयस्य मनस्विन् मनस्विनी मनःशिल
प्रतिश्रुत् उपरि अतिमुक्तक इत्यादि । क्वचिच्छन्दपूरणेऽपि दे
नागसुवर्णं । क्वचिन्न भवति । गिट्ठी मज्जारो मणसिला १ आ
मणोसिला, अइमुत्तय ॥

क्त्वा स्यादेर्णस्वो–र्वा ॥ १ ॥ २७ ॥

क्त्वायाः स्यादीना च यौ णसू तयोरनुस्वारोऽन्त्यो वा भवति।
क्त्वा ॥ काऊण काऊण काउआण काउआण ॥ स्यादि । वच्छे
वच्छेण वच्छेसु वच्छेसु ॥ णस्वोरिति किं करिअ अग्गिणो ॥

विंशत्यादे–र्लुक् ॥ १ ॥ २८ ॥

विंशत्यादेरनुस्वारस्य लुक् भवति । ( विंशतिः ) वीसा (त्रिंशत्
तीसा सस्कृत सक्कय ( सस्कारः ) सक्कारो इत्यादि ॥

---

१ टमयमो ।२।५२' इति इमस पः । २ पमिपुयिनीलादि, इत्यस्य शकारः
३ क्त्तुमस्तृ सुआणा, इति यस्तूणादश ।

मासादे–र्वा ॥ १ ॥ २९ ॥

मासादेरनुस्वारस्य लुक् वा भवति । मास मस मासल मसल कास कस पासू पसु कह कह एव एव नूण नूणं इयाणि इयाणिं दाणि दाणिं कि करेमि किं करेमि सम्मुहं सम्मुह किंसुअ किंसुअ सीहो सिंघो ॥ मांस मासल कास्य पांसु कथ एव नून इदानीं दानीं किं सम्मुख किंशुक सिंह इत्यादि ॥

वर्गेऽन्त्यो वा ॥ १ ॥ ३० ॥

अनुस्वारस्य वर्गे परे प्रत्यासत्तेस्तस्यैव वर्गस्य अन्त्यो वा भवति ॥ पङ्को पंको सङ्खो संखो अङ्गण अंगण लङ्घण लंघण कञ्चुओ कंचुओ लञ्छण लंछण अञ्जिअ अंजिअ सञ्झा संझा कण्ठओ कंठओ उक्कण्ठा उक्कंठा कण्ड कंड सण्ढो संढो अन्तर अंतर पन्थो पंथो चन्दो चंदो बन्धवो बंधवो कम्पइ कंपइ वम्फइ वंफइ कलम्बो कलंबो आरम्भो आरंभो । वर्ग इति किं संसओ संहरइ। नित्यमिच्छन्ति अन्ये ॥

स्वरादसंयुक्तस्यानादेः ॥ १ ॥ १७६ ॥

अधिकारोऽयं ॥ यद् इत ऊर्ध्वम् अनुक्रमिष्यामस्तत् स्वरात् परस्य असंयुक्तस्य अनादेर्भवतीति वेदितव्यम् ॥

कग-चज-तद-पयवां प्रायो लुक् ॥ १ ॥ १७७ ॥

स्वरात्परेषाम् अनादिभूतानाम् असंयुक्तानां कगचजतदपयवां प्रायो लुक् भवति ॥ (क) (तीर्थंकर) तित्थयरो (लोक[1])

---

१ 'कदम्बे वा' इति दम्य ल ॥

लोओ ( शकट ) सयढ ( ग ) ( नगः ) नओ नयर, मयको, (च) सई कयग्गहो कायमणी ( ज ) रयय ) पयावई ( त ) रसायल, पायाल जई ( द ) मयणो गया ( प ) ( रिपु' ) रिऊ ( सुपुरुष' ) सुउरिसो (य) नयण क्याल्ु ( वियोग' ) विओओ (व) लायण्ण ॥ प्रायो ग्रहणात् कचिन्न भवति । सुकुसुम, पयागजल, सुगओ अगरु सचाव विजणं सुतार विदुरो सपाव समवाओ देवो दाणवो ॥ स्वरादित्येव, संकरो सगमो नक्चरो धणजओ विसवओ पुरदरो सवुडो सवरो ॥ असयुक्तस्य इत्येव ॥ अको वग्गो अग्घो वज्ज धुत्तो उद्दामो कज्ज सव्व ॥ कचित्सयुक्तस्यापि ( नक्तचर' ) नक्क चरो ॥ अनादेरित्येव ॥ कालो गघो चोरो जारो तरू दावो पाव वण्णो ॥ यकारस्य आदिभूतस्य जत्वम् तु वक्ष्यते ॥ समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि विवक्ष्यते, तेन तत्र यथादर्शनम् उभयमपि भवति, सुहकरो सुहयरो, आगमिओ आयमिओ, जलचरो, जलयरो, वहुतरो वहुयरो, सुहदो सुहओ, इत्यादि ॥ कचिदादेरपि ( स पुनः ) स उणा, ( स च ) सो अ ( चिह्नम् ) ईंन्घ, ॥ कचिचस्य जः, ( पिशाची ) पिसाजी, ( एकत्वम् ) एगत्त ( एकः ) एगो ( अमुक' ) अमुगो ( अमुकः ) असुगो ( श्रावकः ) सावगो ( आकार' ) आगारो, तित्थगरो ( आकर्षः ) आगरिसो लोगस्सुज्जोअगरा इत्यादिपु तु व्यत्ययश्च

---

१ सटा शकट कैटमे ठ ॥ इति टस्य ढः ॥ २ नगरम् ॥ ३ मृगाङ्क ॥ ४ कचग्रह ॥ ५ काचमणिः ६ रजतम् ॥ ७ प्रजापति ॥ ८ रसातलम् ॥ ९ पातालम् ॥ १० मदन ॥ ११ गदा ॥ १२ नयनम् ॥ १३ लावण्यम् ॥ १४ चिह्ने न्धो वा' इति ह्रस्व न्ध ॥

इत्येव कस्य गत्वम्, आर्षे अन्यदपि दृश्यते (आकुञ्चनम्) आउटण अत्र चस्य टत्वम् ॥

यमुना चामुण्डा कामुकातिमुक्तके मोऽनुनासिकश्च ॥ १ ॥ १७८ ॥

एषु मस्य लुक् भवति, लुकि च सति मस्य स्थानेऽनुनासिको भवति, जउँणा चाउँण्डा काउँओ अणिउँत्तय, क्वचिन्न भवति अइमुतय अइमुत्तअ ॥

नावर्णात् पः ॥ १ ॥ १७९ ॥

अवर्णात् परस्य अनादेः पस्य लुक् न भवति ॥ (शपथः) सवहो (शापः) सावो अनादेरित्येव (परपुष्टः) परउट्ठो ॥

अवर्णो यश्रुतिः ॥ १ ॥ १८० ॥

कगचजेत्यादिना लुकि सति शेषोऽवर्णोऽवर्णात्परो लघुप्रयत्नतरयकारश्रुतिर्भवति । तित्थयरो सयढ नयर मयंको कयग्गहो कायमणी रयय पयावई रसायल मयणो गया नयण दयालू लायण्ण । अवर्ण इति किं, सउणो पउणो (सगुणः प्रगुणः) पउरं (प्रचुर) राईव (राजीवः) निहओ निनओ वाऊ कई ॥ अवर्णादित्येव लोअस्स देअरो, क्वचिद् भवति, पियइ ॥

कुब्ज-कर्पर-कीलके कः खोऽपुष्पे ॥ १ ॥ १८१ ॥

एषु कस्य खो भवति पुष्प चेत् कुब्जाभिधेय न भवति ॥ खुज्जो खप्पर खीलओ, अपुष्प इति किं, (बन्धितुं कुब्जकप्रसू-

---

१ पीव, इति पस्य वकारादेश ।

नम्) नघेउं कुअयपसूण, आर्षेऽन्यत्रापि (कासितम्) खासि (कसित) खसिअ ॥

मरकत-मदकले गः कन्दुके त्वादेः ॥ १ ॥ १८२ ॥

अनयो. कस्य गो भवति कन्दुके त्वाद्यस्य कस्य, मरगय मयगलो गेंदुअ ॥

किराते च[1] ॥ १ ॥ १८३ ॥

किराते कस्य चो भवति, चिलाओ, पुलिन्दे एव अय विधि कामरूपिणि तु नेष्यते (नमामो हरकिरात) नमिमो हरकिराय।

शीकरे भहौ वा ॥ १ ॥ १८४ ॥

शीकरे कस्य भहौ वा भवतः । सीभरो सीहरो ॥ पक्षे सीअरो।

चन्द्रिकायां म. ॥ १ ॥ १८५ ॥

चन्द्रिकाशब्दे कस्य मो भवति । चन्दिमा ॥

निकष-स्फटिक चिकुरे हः ॥ १ ॥ १८६ ॥

एषु कस्य हो भवति । निहसो ॥

स्फटिके ल. ॥ १ ॥ १९७ ॥

स्फटिके टस्य लो भवति।फलिहो । (चिकुरः)चिहुरो । चिहुर शब्द[2] संस्कृतेऽपीति दुर्ग ॥

खघथधभाम् ॥ १ ॥ १८७ ॥

स्वरात्परेषाम् असंयुक्तानाम् अनादिभूतानां ख-घ-थ-ध-भाम् प्रायो हो भवति । (ख) (शाखा) साहा (मुखम्) मुह, मेहला,

---

[1] 'एच्टम्यादौ ।१।५७ इति अकारस्य एत्वम् ॥ [2] हरिद्रादौ ल ।१।२५४ इति रस्य ल ॥

स्थापति

लिहइ (घ) मेहो जहण माहो लाहइ (थ) नाहो आवसहो अ मिहुण कहइ (ध) साहू वाहो वहिरो बाहइ इद-हणू (भ) (सभा) सहा सहावो नह थणहरो सोहइ। स्वरादित्येव सवो संघो कथा वधो खमो (शपः सघः कन्था वन्ध' खम्भः) असयुक्तस्य इत्येव, अक्खइ अग्घइ कत्थइ बधइ सिद्धओ लम्भइ ॥ अनादेरित्येव, गज्जते खे मेहा (गर्जन्ति खे मेघाः) गंन्छइ घणो, प्राय इत्येव, सेरिसवखलो, पैलय-घणो, अँथिरो जिणधम्मो, पणट्ठभओ नभ ॥

पृथकि धो वा ॥ १ ॥ १८८ ॥

पृथक्शब्दे थस्य धो वा भवति ॥ पिध पुध, पिह पुह ॥

शृङ्खले ख. कः ॥ १ ॥ १८९ ॥

शृङ्खलशब्दे खस्य को भवति, सकल ॥

पुन्नाग-भागिन्योर्गो मः ॥ १९० ॥

अनयो-र्गस्य मो भवति, पुन्नामाइ वसते (पुन्नागानि वसन्ते) भामिणी ॥

छागे लः ॥ १ ॥ १९१ ॥

छागे गस्य लो भवति, छालो छाली ॥

खचितपिशाचयोश्च. सल्लौ वा ॥ १ ॥ १९३ ॥

अनयो-श्चस्य यथासंख्य स ल्ल इत्यादेशौ वा भवतः। खसिओ खइओ, पिसल्लो पिसाओ।

---

१ गन्छन्ति घन ॥ २ सपपखल ॥ ३ प्रळयघन ॥ ४ अस्थिरो जिनधर्म ॥ ५ प्रनष्टभयो नभ ॥

जटिले जो झो वा ॥ १ ॥ १९४ ॥

जटिले जस्य झो वा भवति ॥

टो डः ॥ १ ॥ १९५ ॥

स्वरात्परस्य असयुक्तस्य अनादेः टस्य डो भवति ॥ झडिलो जडिलो, (नटो भटो घटः) नडो भडो घडो घडइ, स्वरादित्येव, घटा । असयुक्तस्येत्येव खट्टा (खट्वा) अनादेरित्येव टक्को, क्वचिन्न भवति (अटति) अटइ ॥

सटा शकट-कैटभे ढः ॥ १ ॥ १९६ ॥

एषु टस्य ढो भवति, सढा सयढो ॥

कैटभे भो वः ॥ १ ॥ २४०.॥

कैटभे भस्य वो भवति केढवो ॥

चपेटा पाटौ वा ॥ १ ॥ १९८ ॥

चपेटाशब्दे ण्यन्तपटिधातौ च टस्य लो वा भवति ॥ चविला चविडा फालेइ फाडेइ ॥

ठो ढः ॥ १ ॥ १९९ ॥

स्वरात्परस्यासयुक्तस्यानादेः ठस्य ढो भवति ॥ मढो सढो कमढो कुढारो पढइ, स्वरादित्येव वेकुठो (वैकुण्ठः) असयुक्तस्येत्येव चिट्ठइ, अनादेरित्येव हिअए ठाइ (हृदये तिष्ठति)

अङ्कोठे ल्लः॥ १ ॥ २०० ॥

अङ्कोठे टस्य द्विरुक्तो ल्लो भवति ॥ अकोल्ले-वेल्लतुप्प ॥

१ पटति ॥ २ मठ शठ कमठ कुठार पठति ॥ ३ अङ्कोठतैलतुप्पं देश्योऽयं शब्द ॥

पिठरे हो वा रश्च डः ॥ १ ॥ २०१ ॥

पिठरे ठस्य हो वा भवति, तत्सन्नियोगे च रस्य डो भवति ॥ पिहडो पिढरो ॥

डो लः ॥ १ ॥ २०२ ॥

स्वरात्परस्यासंयुक्तस्य अनादे-र्डस्य प्रायो लो भवति ( वडवा मुख ) वलयामुह ( गरुडः, तडाग, क्रीडति) गरुलो तलाय कीलइ, स्वरादित्येव, मोंड कोंड (मुण्ड कुण्डम् ) असंयुक्तस्य इत्येव खग्गो, अनादेरित्येव, रमइ डिंभो ( रमते डिम्भ. ) प्रायोग्रहणात् क्वचिद् विकल्पः, वडिस वलिस, दाडिम दालिम, गुडो गुलो, णाडी णाली, णड णल ( आपीडः ) आवेडो आमेलो ॥ क्वचिन्न भवति, निबिड ( गौडः ) गउडो पीडिअ नीड उडू तडी ॥

वेणौ णो वा ॥ १ ॥ २०३ ॥

वेणौ णस्य लो वा भवति, वेलू वेणू ॥

तुच्छे तश्चछौ वा ॥ १ ॥ २०४ ॥

तुच्छशब्दे तस्य चछ इत्यादेशौ वा भवतः । चुच्छ छुच्छ तुच्छं ॥

तगर-त्रसर-तूवरे टः ॥ १ ॥ २०५ ॥

एषु तस्य टो भवति । टगरो टसरो टूवरो ॥

प्रत्यादौ डः ॥ १ ॥ २०६ ॥

प्रत्यादिषु तस्य डो भवति, पडिवन्न पडिहासो पडिहारो

---

२ नीपापीडे मो वा इति पस्य म । एत्पीयूषेत्यादिना ईकारस्य एत्वम् च ॥

पाडिप्फद्धी (प्रतिपन्न प्रतिभासः प्रतिहारः प्रतिस्पर्द्धिन्) पंडिसारो पडिनियत्त पडिमा पडिवया पडसुआ पडिकरइ पहुडि पाहुड वावडो पडाया बहेडओ हरडई। मडय ॥ आर्षे (दुष्कृतं) दुकड (सुकृत) सुकड (आहृतम्) आहडं (अवहृतम्) अवहडं इत्यादि ॥ प्राय इत्येव (प्रतिसमय) पइसमय (प्रतीप) पईव (सम्प्रति) सपइ (प्रतिष्ठान) पइट्ठाण (प्रतिष्ठा) पइट्ठा (प्रतिज्ञा) पइण्णा ॥ प्रति प्रभृति प्राभृत व्यापृत पताका बिभीतक हरीतकी मृतक इत्यादि ॥

इत्वे वेतसे ॥ १ ॥ २०७ ॥

वेतसे तस्य डो भवति इत्वे सति ॥ वेडिसो ॥ इत्व इति किं, वेअसो, अत्र इत्व इति व्यावृत्तिबलात् इःस्वप्नादौ, इति इकारो न भवति ॥

गर्भितातिमुक्तके णः ॥ १ ॥ २०८ ॥

अनयोस्तस्य णो भवति, गब्भिणो अणिउर्त्तयं, क्वचिन्न भवति, अइमुत्तय, कथम् एरावणो, ऐरावणशब्दस्य, एरावओ इति तु ऐरावतशब्दस्य ॥

रुदिते दिना ण्ण ॥ १ ॥ २०९ ॥

रुदिते दिना सह तस्य द्विरुक्तो णो भवति। रुण्ण ॥ अत्र केचिद् ऋत्वादिषु द इत्यारब्धवन्त', स तु शौरसेनी मागधीविषय

---

१ प्रतिसार', प्रतिनिवृत्त प्रतिमा, प्रतिपद् प्रतिश्रुत्, प्रतिकरोति ॥ २ 'इत्वेन स्वप्नादित्वादिकारस्य अ' ॥ ३ इ' स्वप्नादौ इत्यस्य इ ॥ ४ गब्भिणा पाठ्य माविमुक्तेत्यादि म घोष ॥ ५ अविम्मयीति दोष ॥

एव दृश्यते, इति नोच्यते ॥ प्राकृते हि (ऋतुः) रिऊ उऊ (रजत) रययं (एतद्) एअ (गतः) गओ (आगतः) आगओ (साम्प्रत) सपयं (यतः) जओ (ततः) तओ (कृत) कय (हृत) हय (हताशः) हयासो (श्रुतः) सुओ (आकृति*) आकिई (निर्वृतः) निव्वुओ (तातः) ताओ (कतरः) कयरो (द्वितीयः) दुइओ इत्यादयः प्रयोगा भवन्ति, न पुनः, उदू रयद इत्यादि ॥ क्वचिद् भावेऽपि व्यत्ययश्च इत्येव सिद्धम् ॥ दिही इत्येतदर्थं तु धृतेर्दिहिः, इति वक्ष्यामः ॥

सप्ततौ रः ॥ १ ॥ २१० ॥

सप्ततौ तस्य रो भवति । सत्तरी ॥

अतसी-सातवाहने लः ॥ १ ॥ २११ ॥

अनयोस्तस्य लो भवति ॥ अलसी सालाहणो सालवाहणो सालाहणी भासा ॥

पलिते वा ॥ १ ॥ २१२ ॥

पलिते तस्य लो वा भवति ॥ पलिल पलिअ ॥

पीते वो ले वा ॥ १ ॥ २१३ ॥

पीते तस्य वो वा भवति, स्वार्थलकारे परे, पीवल पीअल, ल इति किं पीअ ॥

वितस्ति-वसति भरत कातर-मातुलिङ्गे हः ॥ १ ॥ २१४ ॥

एषु तस्य हो भवति, विहत्थी वसही, बहुलाधिकारात् क्वचिन्न भवति वसई, भरहो काहलो माहुलिंग, मातुलुङ्गशब्दस्य तु माउलुग ॥

मेथि-शिथिर-शिथिल प्रथमे थस्य ढः ॥ १ ॥ २१५ ॥

एषु थस्य ढो भवति ह्रस्वापवाद' मेढी सिढिलो सिढिलो पढमो

प्रदीपि-दोहदे लः ॥ १ ॥ २२१ ॥

*प्रपूर्वे दीप्यतौ धातौ दोहदशब्दे च दस्य लो भवति । पली वेइ पलित्तं ॥*

दशनदष्ट-दग्धदोला दण्डदर दाहदम्भ-दर्भ-कदनदो

हदे दो वा डः ॥ १ ॥ २१७ ॥

एषु दस्य डो वा भवति। डसण दसण, डट्ठो दट्ठो, डड्ढो दड्ढो डोला दोला, डडो दडो, डरो दरो, डाहो दाहो, डम्भो दंभो डम्भो दम्भो, कडण कयण, डोहलो दोहलो, दरशब्दस्य भयार्थवृत्तेरेव भवति, अन्यत्र दर-दलिअ ॥

दशदहो ॥ १ ॥ २१८ ॥

अनयो र्धात्वो-र्दस्य डो भवति । डसइ डहइ ॥

सख्या गद्गदे रः ॥ १ ॥ २१८ ॥

सख्यावाचिनि गद्गदशब्दे च दस्य रो भवति, एआरह बारह तेरह गग्गर, अनादेरित्येव दे दस, असयुक्तस्य इत्येव चउद्दह ॥

कदल्याम् अद्रुमे ॥ १ ॥ २२० ॥

अद्रुमवाचिनि कदलीशब्दे दस्य रो भवति, करली अद्रुम इति किं कयली केली ॥

कदम्बे या ॥ १ ॥ २२२ ॥

कदम्ब शब्दे दस्य लो वा भवति ॥ कलम्बो कयम्बो ॥

दीर्घे घो वा ॥ १ ॥ २२३ ॥
दीप्यतौ दस्य घो वा भवति ॥ धिप्पइ दिप्पइ ॥
कदर्थिते वः ॥ १ ॥ २२४ ॥
कदर्थिते दस्य वो भवति, कवट्टिओ, ॥
ककुदे हः ॥ १ ॥ २२५ ॥
ककुदे दस्य हो भवति, कउह ॥
निपधे धो ढः ॥ १ ॥ २२६ ॥
निपधे धस्य ढो भवति, निसढो ॥
वौपधे ॥ १ ॥ २२७ ॥
औपधे धस्य ढो वा भवति, ओसढ ओसह ॥
नो णः ॥ १ ॥ २२८ ॥
स्वरात्परस्यासयुक्तस्यानादे-र्नस्य णो भवति ॥ कणय भयणो
यण नयण माणइ । आर्षे आरनाल अनिलो अनलो इत्याद्यपि ॥
वादौ ॥ १ ॥ २२९ ॥
आदौ वर्तमानस्य असयुक्तस्य नस्य णो वा भवति ॥ णरो
रो, णई नई[3] णेइ नेइ ॥ असंयुक्तस्येत्येव(न्याय.) नाओ ॥
निम्ब-नापिते ल-ण्ह वा ॥ १ ॥ २३० ॥
अनयो-र्नस्य ल ण्ह इत्यादेशौ वा भवत ॥ लिम्बो निम्बो
हाविओ नाविओ ॥

१ 'वृत्तप्रवृत्तमृत्तिकापत्तनकदर्थित ट' इति धस्य ट ॥ २ कनक, मदनो, वचन, यनम् ॥ ३ नरो नदी, नयति ॥

पो वः ॥ १ ॥ २३१ ॥

स्वरात्परस्यासयुक्तस्यानादेः पस्य प्रायो वो भवति ॥
सावो उवसग्गो पईवो कासवो, पाव उवमा कविल कुणव
कवाल महिवालो गोवइ तवइ (पापम् उपमा कपिल कु
कलाप कपाल महिपालो गोपति तपति) स्वरादित्येव कप
असयुक्तस्य इत्येव, अप्पमत्तो (अप्रमत्तः) अनादेरित्येव सु
पढइ, प्राय इत्येव कई रिऊ (कपिर्ऋतुं) एव च पकार
प्राप्तयो—र्लोपवकारयोर्यस्मिन् कृते श्रुतिसुखमुत्पद्यते स तत्र कार्य
पाटि परुष परिघ परिखा पनस पारिभद्रे फः ॥ १ ॥२३

ण्यन्ते पटिधातौ परुषादिषु च शब्देषु पस्य फो भवति
फालेइ फाडेइ, फरुसो फलिहो फलिहा फणसो फालिहद्दो ॥

प्रभूते वः ॥ १ ॥ २३३ ॥

प्रभूते पस्य वो भवति, बहुत्त ॥

पापर्द्धौ रः ॥ १ ॥ २३५ ॥

पापर्द्धौ अपदादौ पकारस्य रो भवति ॥ पारद्धी ॥

फो भहौ ॥ १ ॥ २३६ ॥

स्वरात्परस्यासयुक्तस्यानादेः फस्य भहौ भवत, क्वचिद्
(रेफ) रेभो (शिफा) सिभा, क्वचित्तु हः (मुक्ताफल) मुत्
हल, क्वचिद् उभावपि (सफलं) सभल सहल (शेफालिका)
सेभालिआ सेहालिआ (शफरी) सभरी सहरी (गुफति) गु

१ शपथः, शाप, उपराग, प्रदीप, कश्यप ॥ २ पाप रो वा ॥ १ ॥ २४
इति टस र ॥

गुहइ, स्वरादित्येव गुफइ, असयुक्तस्येत्येव पुप्फं, अनादेरित्येव चिट्ठइ फणी, प्राय इत्येव कसणफणी ॥

घो वः ॥ १ ॥ २३७ ॥

स्वरात्परस्यासंयुक्तस्यानादेर्बस्य वो भवति ॥ अलाबू अलाबू अलाऊ (शनलः) सवलो ॥

बिसिन्या भः ॥ १ ॥ २३८ ॥

बिसिन्या बस्य भो भवति, भिसिणी, स्त्रीलिङ्गनिर्देशादिह न भवति ॥ बिसतन्तु पेलवाण् (बिसतन्तुपेलवाना) ॥

कबन्धे मयौ ॥ १ ॥ २३९ ॥

कमन्धे वस्य मयौ भवतः, कमधो कयधो ॥

विषमे मो ढो वा ॥ १ ॥ २४१ ॥

विषमे मस्य ढो वा भवति ॥ विसढो विसमो ॥

मन्मथे वः ॥ १ ॥ २४२ ॥

मन्मथशब्दे मस्य वो भवति ॥ वम्महो ॥

वाभिमन्यौ ॥ २४३ ॥

अभिमन्युशब्दे मस्य वो वा भवति ॥ अहिवन्नू अहिमन्नू ॥

भ्रमरे सो वा ॥ १ ॥ २४४ ॥

भ्रमरशब्दे मस्य सो वा भवति ॥ भसलो भमरो ॥

आदे-र्यो जः ॥ १ ॥ २४५ ॥

पदादेर्यस्य जो भवति ॥ जसो[1] जमो जाइ, आदेरिति किम्

---

[1] यशो यमो याति ॥

अवयवो विणओ, बहुलाधिकारात् सोपसर्गस्यानादेरपि (संयम) सजमो सजोगो अवजसो, क्वचिन्न भवति। (प्रयोगः) पओगो आर्षे लोपोऽपि (यथाख्यात) अह-क्खाय (यथाजातम्) अहा-जाय ॥

युष्मदर्थपरे तः ॥ १ ॥ २४६ ॥

युष्मच्छब्देऽर्थपरे यस्य तो भवति ॥ तुम्हारिसो तुम्हेरो अर्थपर इति किं जुम्हदम्हपयरण ॥

यष्ट्यां लः ॥ १ ॥ २४७ ॥

यष्ट्या यस्य लो भवति, लट्ठी वेणु लट्ठी उच्छुलट्ठी महुलट्ठी ॥

वोत्तरीयानीयतीयकृद्ये ज्जः ॥ १ ॥ २४८ ॥

उत्तरीयशब्दे अनीयतीयकृद्यप्रत्ययेषु च यस्य द्विरुक्तो जो वा भवति ॥ उत्तरिज्जं उत्तरीअं ॥ अनीये ॥ करणिज्जं करणीअं विम्हयणिज्जं विम्हयणीअं जवणिज्जं जवणीअं। (तीये) बिइज्जो बीओ/( कृद्ये ) पेज्जा पेआ ॥

छायायां होऽकान्तौ वा ॥ १ ॥ २४९ ॥

अकान्तौ वर्तमाने छायाशब्दे यस्य हो वा भवति ॥ वच्छस्स छाही, वच्छस्स छाया आतपाभाव ॥ सच्छाहं सच्छायं ॥ अकान्ताविति किम् मुहच्छाया कान्तिरित्यर्थः ॥

डाह्वौ कतिपये ॥ १ ॥ २५० ॥

---

१ अवयवो विनय ॥ २ युष्मादृश ॥ ३ युष्मदीयः ॥ ४ युष्मदस्मत्प्रकरणम् ॥ ५ विस्मयनीयम् ॥ ६ यापनीयम् ॥ ७ द्वितीय ॥ ८ पेया
९ मुखच्छाया ॥

कतिपयशब्दे यस्य डाह-व इत्यादेशौ पर्यायेण भवतः, कइवाह कइअवं ॥

किरिभेरे रो डः ॥ १ ॥ २५१ ॥

अनयो रस्य डो भवति, किडी भेडो ॥

पर्याणे डा वा ॥ १ ॥ २५२ ॥

पर्याणे रस्य डा इत्यादेशो वा भवति, पडायाण पल्लाण ॥

करवीरे णः ॥ १ ॥ २५३ ॥

करवीरे प्रथमस्य रस्य णो भवति, कणवीरो ॥

हरिद्रादौ लः[1] ॥ १ ॥ २५४ ॥

हरिद्रादिषु शब्देषु असंयुक्तस्य रस्य लो भवति, हलिद्दी दलिद्दाइ दलिद्दो दालिद्द हलिद्दो जहुट्ठिलो सिढिलो मुहलो चलणो वलुणो कलुणो अगालो सकालो सोमालो चिलाओ फलिहा फलिहो फालिहद्दो काहलो लुक्को अवद्दालं भसलो जढल नढलो निट्ठुलो ॥ बहुलाधिकारात् चरणशब्दस्य पादार्थवृत्तेरेव, अन्यत्र, चरणकरण, भ्रमरे ससनियोगे एव, अन्यत्र भमरो । तथा जढर वढरो निट्ठुरो इत्याद्यपि ॥ हरिद्रा दरिद्राति दरिद्र दारिद्र्य हरिद्र युधिष्ठिर शिथिर मुखर चरण वरुण करुण अगार सत्कार सुकुमार किरात परिखा परिघ पारिभद्र कातर रुग्ण अपद्वार भ्रमर जठर नठर निष्ठुर इत्यादि, आर्षे दुवालसंगे इत्याद्यपि ॥

लाहल लाङ्गल लाङ्गूले वादे र्णः ॥ १ ॥ २५६ ॥

---

1 पयस्तपयाणसौकुमार्ये ल, इति यस्य स्तम् ॥

एषु आदे-र्लस णो वा भवति ॥ णाहलो, लाहलो, न
लगल, णंगूल लंगूल ॥

शबरे बो मः ॥ १ ॥ २५८ ॥

शबरे बस्य मो भवति, समरो ॥

स्वप्ननीव्योर्वा ॥ १ ॥ २५९ ॥

अनयोर्वस्य मो वा भवति, सिमिणो सिविणो, नीमी नीवी

स्नुषाया ण्हो न वा ॥ १ ॥ २६१ ॥

स्नुषाशब्दे षस्य ण्ह णकाराक्रान्तो हो वा भवति, सुण्हा सुस

दश पाषाणे हः ॥ १ ॥ २६२ ॥

दशनशब्दे पाषाणशब्दे च शषयो' यथादर्शनं हो वा भव
दहमुहो दसमुहो; दहबलो दसबलो/ दहरहो दसरहो, दह द
एगारह/ बारह तेरह पाहाणो पासाणो ॥

दिवसे सः ॥ १ ॥ २६३ ॥

दिवसे सस्य हो वा भवति ॥ दिवहो दिवसो ॥

हो घोऽनुस्वारात् ॥ १ ॥ २६४ ॥

अनुस्वारात् परस्य हस्य घो वा भवति । सिंघो सीहो संघा
संहारो । क्वचिदननुस्वारादपि, (दाह') दाघो ॥

शिराया वा ॥ १ ॥ २६६ ॥

शिराशब्दे आदेर्ञ्छो वा भवति, छिरा सिरा ॥

लुग् भाजनदनुजराजकुले ज' सस्वरस्य न वा ॥१॥२६७

एषु सस्वरस्य जकारस्य लुग् वा भवति, भाणं भायणं, दणुवह
दणुअवहो, राउलं रायउलं ॥

व्याकरणप्रकारागते कगोः ॥ १ ॥ २६८ ॥

एषु कस्य गस्य च सस्वरस्य लुग् वा भवति, वारण वायरण, पारो पायारो, आओ, आयओ ॥

किसलयकालायसहृदये यः ॥ १ ॥ २६९ ॥

एषु सस्वरस्य यकारस्य लुग् वा भवति, किसलं किसलय, कालास कालायस, महण्णव-समा सहिआ[1] ॥ जाला ते सहिअएहिं घेप्पति[2] ॥ निसमणुप्पिय-हिअस्स हिअय[3] ॥

दुर्गादेव्युदुम्बर-पादपतनपादपीठेऽन्तर्दः ॥ १ ॥ २७० ॥

एषु सस्वरस्य दकारस्य अन्तर्मध्ये वर्त्तमानस्य लुग् वा भवति ॥ दुग्गावी दुग्गाएवी, उंबरो उउम्बरो पावडण पायवडण, पावीढ पायवीढ ॥ अन्तरिति किं, दुर्गादेव्याम् आदौ मा भूत् ॥

यावत्तावज्जीवितावर्त्तमानावट-प्रावारकदेव
कुलैवमेवे वः ॥ १ ॥ २७१ ॥

यावदादिषु सस्वरवकारस्य अन्तर्वर्त्तमानस्य लुग् वा भवति ॥ जा जाव, ता ताव, जीअ जीविअ, अत्तमाणो आवत्तमाणो, अडो अवडो, पारओ पावारओ, देउल देवउल, एमेव एवमेव ॥ अन्तरित्येन, एवमेव इत्यन्तस्य न भवति ॥

अधुना संयुक्तव्यञ्जनसन्धिर्विधीयते
संयुक्तस्य ॥ २ ॥ १ ॥

---

१ महार्णवसमा सहृदया ॥ २ (यस्मिन् ते सहृदयैर्गृह्यन्ते) सहृदयैः स गुण गृह्यन्ते इत्यर्थ ॥ ३ निशमनार्पितहृदयस्य हृदयम् ॥

अधिकारोऽय ज्यायामीत् ( २ ॥ ११५ ) इति यावत्, यदि ऊर्ध्वम् अनुक्रमिष्यामः तत्सयुक्तस्येति वेदितव्यम् ॥

कग-टड-तद्-प-शषस४क४पाम् ऊर्ध्वं लुक् ॥ २ ॥ ७७।

सयोगस्य ऊर्ध्वं वर्तमानानाम् एषां वर्णाना लुग् भवति ( क ) भुंत सित्थ ॥ ग ॥ दुंद्धं मुद्धं ॥ ट ॥ छप्पओ ( षट्पदः कप्फल ( कट्फलम् ) ॥ ड ॥ खग्गो सज्जो ( खड्ग षड्जः ) ॥ त उप्पल ( उत्पलम् ) उप्पाओ ( उत्पादः ) ॥ द ॥ मग्गु मोग्ग ( मद्गुः मुद्गरः ) ॥ प ॥ सुत्तो गुत्तो ( सुप्तो गुप्तः ) ॥ श ॥ ल ( श्लक्ष्णम् ) निच्चलो चुअइ ( निश्चल., श्चोतति ) ॥ ष ॥ गोट्ठ छट्ठो, निट्ठुरो ( गोष्ठि., षष्ठो, निष्ठुर. ) ॥ स ॥ खलिओ ने ( स्खलितः, स्नेह )४क ॥ दुक्ख ( दु खम् )४प ॥ अन्तप्पा ( अन्त'पातः ) ॥

अनादौ शेषादेशयो र्द्वित्वम् ॥ २ ॥ ८९ ॥

पदस्यानादौ वर्तमानस्य लुगात् शेषस्य संयुक्तादेशस्य च द्वि भवति ॥ शेष ॥ कप्पतरू, ( कल्पतरु , ) भुत्त, दुद्ध, नग्गो उ टक्को, मुग्गो, ( नग्न उल्का अर्को मुग्ध ) आदेश ॥ डक्को जा रग्गो पिच्ची रूप्पी ( दष्टो, यक्षो, रक्तः, कृत्ति', रुक्मी ) कचि भवति, कम्पिणो, अनादावितिं किं खलिअ थेरो खम्भो ॥ द्वयो द्वित्वमस्ति एवेति न भवति, विंचुओ, भिंण्डिवालो ॥

शारुमुरुदष्टकरणमृदुत्वे णो या ॥ २ ॥ २ ॥

---

१ भुक्त सिक्थम् ॥ २ दुग्धं मुग्धम् ॥ ३ श्लक्ष्ण इति ॥ ४ भिन्दिपाल

एषु संयुक्तस्य को वा भवति, सक्को सत्तो, मुक्को मुत्तो, डक्को दट्ठो[1], लुक्को लुग्गो[2], माउक्क माउत्तण[3] ॥

क्षः खः क्वचित्तु छझौ ॥ २ ॥ ३ ॥

क्षस्य खो भवति, क्वचित्तु छझावपि ॥ खओ, लक्खण; क्वचित्तु, छझौ अपि, खीण छीण, झीण झिज्जइ ॥

छोऽक्ष्यादौ ॥ २ ॥ १७ ॥

अक्ष्यादिषु[4] संयुक्तस्य क्षस्य छो भवति । खस्यापवादः ॥ अच्छि उच्छु, लच्छी कच्छो छीअ[5] छीर सरिच्छो वच्छो मच्छिया छेत्त छुहा दच्छो कुच्छी वच्छ छुण्णो कच्छा छारो कुच्छेअय छुरो उच्छा छय सारिच्छ । क्वचित् स्थगितशब्देऽपि छइअ ॥ आर्षे । इक्खू खीर । सारिक्ख इत्याद्यपि दृश्यते ॥

क्षमायां वा ॥ २ ॥ १८ ॥

ऋक्षशब्दे संयुक्तस्य छो वा भवति । रिच्छ रिक्ख, रिच्छो रिक्खो, कथं छूढ क्षिप्तमिति, वृक्षक्षिप्तयोरुक्खछूढौ इति भविष्यति ॥

क्षमायां कौ ॥ २ ॥ १९ ॥

कौ पृथिव्यां वर्तमाने क्षमाशब्दे संयुक्तस्य छो भवति ॥ छमा

---

१ 'दशनदष्टदग्धदोलादण्डेत्यादिना' दस्य ड ॥ २ 'फेनाप्युणादय' इति लुक् ॥ ३ 'आरङ्वामृदुकमृदुत्वे वा, इति ककारस्य आगमः ॥ ४ अक्षि इक्षु लक्ष्मी कक्ष क्षुत क्षीर सदृक्ष वृक्ष मक्षिका क्षेत्र क्षुध् दक्ष कुक्षि वक्षस् क्षुण्ण कक्षा क्षार कौक्षेयक क्षुर उक्षन् क्षत सादृश्य इति अक्ष्यादयः ॥ ५ 'प्रथादीषी ॥ १ ॥ १५ ॥' इति इकारस्योकार ॥ ६ ई क्षुते ॥ १ ॥ ११२ ॥ ७ 'क्षुधो हा' ॥ १ ॥ १७ ॥ इति धो हादेश ॥

पृथिवी, लाक्षणिकस्यापि क्ष्मादेशस्य भवति ॥ (छैमा') छ
काविति किं, खमा क्षान्तिः ॥

क्षण उत्सवे ॥ २ ॥ २० ॥

क्षणशब्दे उत्सवाभिधायिनि संयुक्तस्य छो भवति ॥ छ
उत्सव इति किं, खणो ॥

ष्कस्कयोर्नाम्नि ॥ २ ॥ ४ ॥

अनयोर्नाम्नि संज्ञायां खो भवति ॥ ष्क ॥ पोक्खरं, पोक्ख
रिणी, निक्खं ॥ स्क ॥ खंधो, खंधावारो, अवक्खंदो ॥ ना
इति किम् । दुक्करं निक्कंप निक्कओ नमोक्कारो सक्कय सक्कारो ॥

शुष्कस्कन्दे वा ॥ २ ॥ ५ ॥

अनयोः ष्कस्कयोः खो वा भवति ॥ सुक्खं सुक्कं खन्दो कंदो

क्ष्वेटकादौ ॥ २ ॥ ६ ॥

क्ष्वेटकादिषु संयुक्तस्य खो भवति ॥ खेडओ । क्ष्वेटकशब्
विषपर्याय', (क्ष्वोटक.) खोडओ (स्फोटक') खोडओ (स्फटक'
खेडओ (स्फेटिक ) खेडिओ ॥

स्थाणावहरे ॥ २ ॥ ७ ॥

स्थाणौ संयुक्तस्य खो भवति हरश्चेद्वाच्यो न भवति ॥ खाणू
अहर इति किम् । थाणुणो रेहा ॥

स्तम्भे स्तो वा ॥ २ ॥ ८ ॥

---

१ क्ष्मा... ॥ २ ॥ १०१ ॥ इति अकारागमः ॥ २ ५
पुक्खरं, निक्खम्, निक्कओ, नमस्कार, संस्कृत, संस्कार ॥

स्तम्भशब्दे स्तस्य खो वा भवति ॥ खम्भो, थम्भो । काष्ठादिमयः ॥

थठावस्पन्दे ॥ २ ॥ ९ ॥

स्पन्दाऽभाववृत्तौ स्तम्भे स्तस्य थठौ भवत', थम्भो ठम्भो ॥ ( स्तम्भ्यते ) थम्भिज्जइ ठम्भिज्जइ ॥

रक्ते गो वा ॥ २ ॥ १० ॥

रक्तशब्दे संयुक्तस्य गो वा भवति ॥ रग्गो, रत्तो ॥

शुल्के ङ्गो वा ॥ २ ॥ ११ ॥

शुल्कशब्दे संयुक्तस्य ङ्गो वा भवति ॥ सुङ्गं सुक्कं ॥

कृत्तिचत्वरे च ॥ २ ॥ १२ ॥

अनयो॰ संयुक्तस्य चो भवति ॥ किच्ची, चच्चरं ॥

त्योऽचैत्ये ॥ २ ॥ १३ ॥

चैत्यवर्जिते त्यस्य चो भवति । सच्चं, पच्चओ ॥ अचैत्य इति किम् ॥ चइत्तं ॥

प्रत्यूषे षश्च हो वा ॥ २ ॥ १४ ॥

प्रत्यूषे त्यस्य चो भवति तत्सनियोगे च षस्य हो वा भवति ॥ पच्चूहो पच्चूसो ॥

त्वथ्वद्ध्वां चछजझाः क्वचित् ॥ २ ॥ १५ ॥

एषां यथासंख्यम् एते क्वचिद् भवन्ति ॥ ( भुक्त्वा ) भोच्चा ( ज्ञात्वा ) नच्चा ( श्रुत्वा ) सोच्चा ॥ ( पृथ्वी ) पिच्छी ॥ ( विद्वान् ) विज्जं ॥ ( बुध्वा ) बुज्झा ) ॥

भोत्ता सयल पिच्छि विज्ज बुज्झा अणण्णयगामि ॥
चइऊण तवं काउ सन्ती पत्तो सिव परम

वृश्चिके श्चेर्ञ्चुर्वा ॥ २ ॥ १६ ॥

वृश्चिके श्चेः सस्वरस्य स्थाने ञ्चुरादेशो वा भवति, छस्यापवादः ॥ विञ्चुओ विंचुओ ॥ पक्षे विञ्छिओ ॥

ह्रस्वात् थ्यश्चत्सप्साम् अनिश्चले ॥ २ ॥ २१ ॥

ह्रस्वात् परेषां थ्यश्चत्सप्सां छो भवति ॥ निश्चले तु न भवति ॥ थ्य, पच्छं पच्छा मिच्छा ॥ श्च, पच्छिमं अच्छेरं पच्छा ॥ त्स, उच्छाहो, मच्छलो मच्छरो संवच्छलो संवच्छरो ॥ प्स, लिच्छइ जुगुच्छइ अच्छरा ॥ ह्रस्वादिति किम्, ऊसारिओ । अनिश्चल इति किम् । निच्चलो । आर्षे तथ्ये चोऽपि, तच्चं ॥

सामर्थ्योत्सुकोत्सवे वा ॥ २ ॥ २२ ॥

एषु संयुक्तस्य छो वा भवति ॥ सामच्छं सामत्थं ॥ उच्छुओ ऊसुओ ॥ उच्छवो ऊसवो ॥

स्पृहायाम् ॥ २ ॥ २३ ॥

स्पृहाशब्दे संयुक्तस्य छो भवति ॥ फस्यापवादः ॥ छिहा ॥ बहुलाधिकारात् क्वचिदन्यदपि । निप्पिहो ॥

द्यय्यर्यां जः ॥ २ ॥ २४ ॥

एषां संयुक्तानां जो भवति ॥ द्य, मज्जं, अवज्जं, वेज्जो, जुई,

---

१ भुक्त्वा सकलां पृथ्वीं विद्यां बुद्ध्वा अनन्यकगामिनीम् ॥ त्यक्त्वा तपः कृत्वा शान्तिः प्राप्तः शिवं परमम् ॥ २ [illegible] इति धनुस्वारागम ॥ ३ [illegible] न्यायेनैव वा ॥ १ ॥ ५८ ॥ इति [illegible] ॥

जोओ ॥ य्य, जज्जो सेज्जा ॥ र्य ॥ भज्जा, चौर्यसमत्वात् भारिआ, कज्जं वज्जं पज्जाओ पज्जत्त मज्जया ॥

अभिमन्यौ जञ्जौ वा ॥ २ ॥ २५ ॥

अभिमन्यौ संयुक्तस्य जो ञश्च वा भवति ॥ अहिमज्जू अहिमञ्जू ॥ पक्षे अहिमन्नू, अभिग्रहणादिह न भवति मन्नू ॥

साध्वसध्यह्यां झः ॥ २ ॥ २६ ॥

साध्वसे ध्यह्ययोश्च संयुक्तस्य झो भवति ॥ सज्झस ॥ ध्य ॥ बज्झए, झाण, उवज्झाओ, सज्झाओ, सज्झं, विंझो ॥ ह्य ॥ मज्झं, गुज्झं, णज्झइ ॥

ध्वजे वा ॥ २ ॥ २७ ॥

ध्वजशब्दे संयुक्तस्य झो वा भवति ॥ झओ धओ ॥

इन्धौ झा ॥ २ ॥ २८ ॥

इन्धौ धातौ संयुक्तस्य झा इत्यादेशो भवति ॥ समिज्झाइ विज्झाइ ॥

वृत्तप्रवृत्तमृत्तिकापत्तनकदर्थिते टः ॥ २ ॥ २९ ॥

एषु संयुक्तस्य टो भवति ॥ वट्टो पवट्टो मट्टिया पट्टण कवट्टिओ ॥

र्तस्याऽधूर्तादौ ॥ २ ॥ ३० ॥

र्तस्य टो भवति ॥ धूर्तादीन् वर्जयित्वा ॥ केवट्टो, वट्टी, जट्टो, पयट्टइ, वट्टुलं, रायवट्टयं, नट्टई, संवट्टिअं ॥ अधूर्तादाविति किम् ॥ धुत्तो, कित्ती, वत्ता, आवत्तण, निवत्तण, पवत्तण, संव-

१ धूर्त कीर्ति वार्ता आवर्तन निवर्तन प्रवर्तन संवर्तन आवर्तक निवर्तक निवर्तक प्रवर्तक संवर्तक वर्तिका वार्तिक कार्तिक उत्कर्तित कर्तरी मूर्ति मूर्त मुहूर्त इत्यादय ॥

भोचा सयलं पिच्छि विज्जं वुज्झा अणण्णयगामि ॥
चइऊण तवं काउ सन्ती पत्तो सिव परम

वृश्चिके श्चेर्ञ्चुर्वा ॥ २ ॥ १६ ॥

वृश्चिके श्चे॰ ससरस्य स्थाने ञ्चुरादेशो वा भवति, छसापवादः॥ विञ्चुओ विंचुओ ॥ पक्षे विच्छिओ ॥

ह्रस्वात् थ्यश्चत्सप्साम् अनिश्चले ॥ २ ॥ २१ ॥

ह्रस्वात् परेषां थ्यश्चत्सप्सां छो भवति ॥ निश्चले तु न भवति ॥ थ्य, पच्छं पच्छा मिच्छा ॥ श्च, पच्छिम अच्छेरं पच्छा ॥ त्स, उच्छाहो, मच्छली मच्छरो संवच्छलो संवच्छरो ॥ प्स, लिच्छइ जुगुच्छइ अच्छरा ॥ ह्रस्वादिति किम्, ऊसारिओ । अनिश्चल इति किम् । निच्चलो । आर्षे तथ्ये चोऽपि, तच्च ॥

सामर्थ्योत्सुकोत्सवे वा ॥ २ ॥ २२ ॥

एषु संयुक्तस्य छो वा भवति ॥ सामच्छं सामत्थं ॥ उच्छुओ ऊसुओ ॥ उच्छवो ऊसवो ॥

स्पृहायाम् ॥ २ ॥ २३ ॥

स्पृहाशब्दे संयुक्तस्य छो भवति ॥ फसापवादः ॥ छिहा ॥ बहुलाधिकारात् कचिदन्यदपि । निप्पिहो ॥

द्यय्यर्यां जः ॥ २ ॥ २४ ॥

एषां संयुक्तानां जो भवति ॥ द्य, मज्जं, अवज्जं, वेज्जो, जुई,

---

१ भुक्त्वा सकलां पृथ्वीं विद्यां बुद्ध्वाऽनन्यकगामिनीम् ॥ त्यक्त्वा तपः कृत्वा शान्तिः प्राप्तः शिवं परमम् ॥ २ वक्रादावन्तः इति अनुस्वारागमः ॥ ३ पद्मुत्कारपर्यन्ताश्चर्ये वा ॥ १ ॥ ५८ ॥ इति एकारादेशः ॥

जोओ ॥ य्य, जज्जो सेज्जा ॥ र्य ॥ भज्जा, चौर्यसमत्वात् भारिआ, कज्ज वज्ज पज्जाओ पज्जत्त मज्जया ॥

अभिमन्यौ जज्जौ वा ॥ २ ॥ २५ ॥

अभिमन्यौ सयुक्तस्य जो ज्जश्च वा भवति ॥ अहिमजू अहिमज्जू ॥ पक्षे अहिमन्नू, अभिग्रहणादिह न भवति मन्नू ॥

साध्वसध्यह्यां झः ॥ २ ॥ २६ ॥

साध्वसे ध्यह्ययोश्च सयुक्तस्य झो भवति ॥ सज्झस ॥ ध्य ॥ वज्झए, झाण, उवज्झाओ, सज्झाओ, सज्झ, विंझो ॥ ह्य ॥ मज्झ, गुज्झ, णज्झइ ॥

ध्वजे वा ॥ २ ॥ २७ ॥

ध्वजशब्दे सयुक्तस्य झो वा भवति ॥ झओ धओ ॥

इन्धौ झा ॥ २ ॥ २८ ॥

इन्धौ धातौ सयुक्तस्य झा इत्यादेशो भवति ॥ समिज्झाइ विज्झाइ ॥

वृत्तप्रवृत्तमृत्तिकापत्तनकदर्थिते टः ॥ २ ॥ २९ ॥

एषु सयुक्तस्य टो भवति ॥ वट्टो पवट्टो मट्टिया पट्टण कवट्टिओ ॥

र्तस्याऽधूर्त्तादौ ॥ २ ॥ ३० ॥

र्तस्य टो भवति ॥ धूर्त्तादीन् वर्जयित्वा ॥ केवट्टो, वट्टी, जट्टो, पयट्टइ, वट्टुल, रायवट्टय, नट्टई, सवट्टिअ ॥ अधूर्त्तादाविति किम् ॥ धुत्तो, कित्ती, वत्ता, आवत्तण, निवत्तण, पवत्तण, सव

[1] धूर्त कीर्ति वार्त्ता आवर्त्तन निवर्त्तन प्रवर्त्तन संवर्त्तन आवर्त्तक निवर्त्तक निर्वर्त्तक प्रवर्त्तक संवर्त्तक वर्त्तिका वार्त्तिका कार्त्तिक उत्कर्त्तित कर्त्तरी मूर्त्ति मूर्त्त मुहूर्त्त इत्यादय ॥

त्तण, आवत्तओ निवत्तओ, निव्वत्तओ, पवत्तओ, सवत्तओ, वत्तिआ, वत्तिओ, कत्तिओ, उक्कत्तिओ, कत्तरी, मुत्ती, मुत्तो, मुहुत्तो, । बहुलाधिकाराद् वट्टा ॥
कैंची

ठोऽस्थिविसस्थुले ॥ २ ॥ ३२ ॥

अनयोः सयुक्तस्य ठो भवति ॥ अट्ठी विसठुल ॥

स्त्यानचतुर्थार्थे वा ॥ २ ॥ ३३ ॥

एषु सयुक्तस्य ठो वा भवति ॥ ठीण, थीण ॥ चउट्ठो, अट्ठो प्रयोजनम् । अत्थो धनम् ॥

ष्टस्याऽनुष्ट्रेष्टासदष्टे ॥ २ ॥ ३४ ॥

उष्ट्रादिवर्जिते ष्टस्य ठो भवति ॥ लट्ठी, मुट्ठी, दिट्ठी, सिट्ठी, पुट्ठो, कट्ठ, सुरट्ठा, इट्ठो, अणिट्ठ, ॥ अनुष्ट्रेष्टासदष्ट इति किम्, उट्टो इट्टा चुण्ण व्व, सदट्टो ॥

गर्त्ते डः ॥ २ ॥ ३५ ॥

गर्त्तशब्दे सयुक्तस्य डो भवति ॥ टापवाद. । गड्डो गड्डा ॥

संमर्द-वितर्दि विच्छर्द-छर्दि-कपर्द मर्दिते र्दस्य ॥ २ ॥ ३६ ॥

एषु र्दस्य डत्व भवति ॥ समड्डो, विअड्डी, विच्छड्डो, छड्डी, कवड्डो, मड्डिओ समड्डीओ ॥

गर्दभे वा ॥ २ ॥ ३७ ॥

गर्दभे र्दस्य डो वा भवति ॥ गड्डहो गद्दहो ॥

कन्दरिकाभिन्दिपाले ण्डः ॥ २ ॥ ३८ ॥

अनयोः सयुक्तस्य ण्डो भवति ॥ कण्डलिआ भिण्डिवालो ॥

स्तब्धे ठढौ ॥ २ ॥ ३९ ॥

स्तब्धे संयुक्तयोर्यथाक्रमं ठढौ भवतः ॥ ठड्ढो ॥

दग्धविदग्धवृद्धिवृद्धे ढः ॥ २ ॥ ४० ॥

एषु संयुक्तस्य ढो भवति ॥ दड्ढो, वियड्ढो, वुड्ढी, वुड्ढो, ॥ क्वचिन्न भवति । विद्धकइनिरूविअ ॥

श्रद्धर्द्धि मूर्धार्धेऽन्ते वा ॥ २ ॥ ४१ ॥

एषु संयुक्तस्य अन्ते वर्त्तमानस्य ढो वा भवति ॥ सड्ढा, सद्धा ॥ इड्ढी, रिद्धी ॥ मुड्ढा, मुद्धा ॥ अड्ढं अद्धं ॥

म्नज्ञो र्णः ॥ २ ॥ ४२ ॥

अनयोर्णो भवति ॥ म्न ॥ निण्णं पज्जुण्णो ॥ णाणं सण्णा पण्णा विण्णाणं ॥

पञ्चाशत्पञ्चदशदत्ते ॥ २ ॥ ४३ ॥

एषु संयुक्तस्य णो भवति ॥ पण्णासा, पण्णरह, दिण्णं ॥

मन्यौ न्तो वा ॥ २ ॥ ४४ ॥

मन्युशब्दे संयुक्तस्य न्तो वा भवति ॥ मन्तू मन्नू ॥

स्तवे वा ॥ २ ॥ ४६ ॥

स्तवशब्दे स्तस्य थो वा भवति ॥ थवो तवो ॥

पर्य्यस्ते थटौ ॥ २ ॥ ४७ ॥

पर्यस्ते स्तस्य पर्यायेण थटौ भवतः ॥ पल्लत्थो पल्लट्टो ॥

---

१ निम्न ॥ २ प्रद्युम्न ॥ ३ ज्ञानम् ॥ ४ क्रियामादिर्विषुत ॥ १ ॥ १५ ॥ इत्याकारादेश ॥ ५ 'ऋ' स्वप्नादौ इत्यस्य दृश्यम् ॥ ६ पय्यस्तपर्याणा सौकुमार्ये ल्लः ॥ २ ॥ ६७ ॥ इति सूत्र ल्ल ॥

घोत्साहे थो हश्च र' ॥ २ ॥ ४८ ॥

उत्साहशब्दे संयुक्तस्य थो वा भवति, तत्सनियोगे च ह्स्य रः ॥ उत्थारो उच्छाहो ॥

आश्लिष्टे लधौ ॥ २ ॥ ४९ ॥

आश्लिष्टे संयुक्तयोर्यथासंख्य लध इत्यादेशौ भवतः॥ आलिद्धो॥

चिह्ने न्धो वा ॥ २ ॥ ५० ॥

चिह्ने संयुक्तस्य न्धो वा भवति ॥ ण्हापवादः ॥ पक्षेऽसोऽपि ॥ चिन्ध इन्ध चिण्ह ॥

भस्मात्मनो पो वा ॥ २ ॥ ५१ ॥

अनयो संयुक्तस्य पो वा भवति ॥ भप्पो भस्सो अप्पा अप्पाणो, पक्षे अत्ता ॥

ड्मक्मो' ॥ २ ॥ ५२ ॥

ड्मक्मयो' पो वा भवति ॥ (कुड्मल) कुप्पल ॥ (रुक्मिणी) रुप्पिणी ॥ क्वचिच् च्मोऽपि, (रुक्मी) रुप्पी ॥

भीष्मे ष्म' ॥ २ ॥ ५४ ॥

भीष्मे ष्मस्य फो भवति ॥ भिप्फो ॥

श्लेष्मणि वा ॥ २ ॥ ५५ ॥

श्लेष्मशब्दे ष्मस्य फो वा भवति ॥ सेप्फो सिलिम्हो ॥

ह्वो भो वा ॥ २ ॥ ५७ ॥

ह्वस भो वा भवति ॥ जिब्भा जीहा ॥

वा विह्वले वौ वश्च ॥ २ ॥ ५८ ॥

विह्वले ह्वस्य भो वा भवति ॥ तत्सनियोगे च विशब्दे वस्य वा भो भवति ॥ भिब्भलो विब्भलो विहलो ॥

वोर्ध्वे ॥ २ ॥ ५९ ॥

ऊर्ध्वशब्दे सयुक्तस्य भो वा भवति ॥ उब्भ उद्ध ॥

कश्मीरे म्भो वा ॥ २ ॥ ६० ॥

कश्मीरशब्दे सयुक्तस्य म्भो वा भवति ॥ कम्भारा कम्हारा ॥

न्मो मः ॥ २ ॥ ६१ ॥

न्मस्य मो भवति ॥ अधो लोपापवादः ॥ जम्मो वम्महो मम्मण ॥ अव्यक्त ध्वनि

ग्मो वा ॥ २ ॥ ६२ ॥

ग्मस्य मो वा भवति ॥ (युग्मम्) जुम्म जुग्ग ॥ (तिग्मम्) तिम्म । तिग्ग ॥

ब्रह्मचर्यतूर्यसौन्दर्यशौण्डीर्ये र्यो रः ॥ २ ॥ ६३ ॥

एषु र्यस्य रो भवति ॥ जापवादः ॥ बम्हचेर । चौर्यसमत्वाद्, बम्हचरिअ, तूर । सुन्देर, सोण्डीर ॥ पराक्रम

कला धैर्ये वा ॥ २ ॥ ६४ ॥

धैर्यशब्दे र्यस्य रो वा भवति ॥ धीर धिज्ज ॥ सूरो सुज्जो इति तु सूर-सूर्यप्रकृतिभेदात् ॥

पर्यस्तपर्याणसौकुमार्ये ल्लः ॥ २ ॥ ६८ ॥

एषु र्यस्य ल्लो भवति ॥ (पर्यस्तम्) पल्लट्ट पल्लत्थ, पल्लाण,

---

१ मन्मथ । मन्मथे म ॥ १ ॥ २४२ ॥ इति मकारस्य वकारादेश ॥

सोऽमञ्ज ॥ पर्ङ्को, इति तु मल्यङ्कशब्दस्य यलोपे द्वित्वे च। पलिअको इत्यपि चौर्यसमत्वात् ॥

बृहस्पतिवनस्पत्योः सो वा ॥ २ ॥ ६९ ॥

अनयोः संयुक्तस्य सो वा भवति ॥ बहस्सई बहप्फई ॥ भयस्सई भयप्फई/वणस्सई वणप्फई ॥

बाष्पे होऽश्रुणि ॥ २ ॥ ७० ॥

बाष्पशब्दे संयुक्तस्य हो भवति ॥ अश्रुण्यभिधेये, बाहो नेत्र जलम्, अश्रुणीति किम् बप्फो, उष्मा ॥

कार्षापणे ॥ २ ॥ ७१ ॥

कार्षापणे संयुक्तस्य हो भवति ॥ काहावणो, कथ कहावणो ॥

ह्रस्वःसंयोगे ॥ १ ॥ ८४ ॥

इतिपूर्वमेव ह्रस्वत्वे पश्चादादेशे, कर्षापणशब्दस्य वा भविष्यति ॥

पक्ष्मश्मष्मस्मह्मां म्हः ॥ २ ॥ ७४ ॥

पक्ष्मशब्दसम्बन्धिन[1], संयुक्तस्य, श्मष्मस्मह्मां च मकाराक्रान्तो, हकार आदेशो भवति (पक्ष्मन्) पम्हाइ ॥ पम्हललोअणा। (कुश्मानः) कुम्हाणो (कश्मीरा[1]) कम्हारा ॥ ष्म।(ग्रीष्मः) गिम्हो (ऊष्मा) उम्हा। स्म (अस्मादृशः) अम्हारिसो (विस्मय[1]) विम्हओ। ह्म (ब्रह्मा) बम्हा सुम्हा, बम्हणो बम्हचेर ॥ क्वचित् म्भोऽपि दृश्यते, बम्भणो बम्भचेर सिम्भो ॥ क्वचिन्न भवति। (रश्मिः) रस्सी (स्मरः) सरो ॥

सूक्ष्म-श्न ष्ण-स्न-ह्न ह्ण क्ष्णां ण्हः ॥ २ ॥ ७५ ॥

---

१ अतो मुकुटादिषु ॥ १ ॥ १०७ ॥ इति उकारस्य आयम्

सूक्ष्मशब्दसम्बन्धिन॰ संयुक्तस्य, श्नष्णस्नह्नह्णक्ष्णा च णकाराक्रान्तो हकार आदेशो भवति ॥ (सूक्ष्म) सण्हं, श्न, पण्हो, सिण्हो, ष्ण, विण्हू, जिण्हू, कण्हो, उण्हीसं ॥ स्न, जोण्हा ण्हाओ, पण्हुओ ॥ ह्न। वण्ही जण्हू। ह्ण, पुव्वण्हो अवरण्हो ॥ क्ष्ण, सण्हं तिण्हं ॥ विप्रकर्षे तु कृष्णकृत्स्नशब्दयोः कसणो कसिणो ॥

मध्याह्ने हः ॥ २ ॥ ८४ ॥

मध्याह्ने हस्य लुग् वा भवति ॥ मज्झन्नो मज्झण्हो ॥

ह्लो ल्हः ॥ २ ॥ ७६ ॥

ह्लः स्थाने लकाराक्रान्तो हकारो भवति ॥ कल्हार पल्हाओ ॥ प्रह्ला

सर्वत्रलवरामवन्द्रे ॥ २ ॥ ७९ ॥ कमल

इत्युक्तम् ॥ अत्र च द्व इत्यादिसंयुक्तानाम् उभयप्राप्तौ यथा दर्शन लोपः ॥ क्वचिदूर्ध्वं (उद्विग्न॰) उव्विग्गो, (द्विगुण॰) बिउणो, (द्वितीय॰) बीओ, (कल्मष) कम्मसं, (सर्व) सव्वं, (शुल्वम्) सुव्वं ॥ क्वचित्तु अधः (काव्य) कव्वं, (कुल्या) कुल्ला (माल्य) मल्लं (द्विपः) दिओ (द्विजातिः) दुआई ॥ क्वचित्पर्यायेण (द्वारम्) दारं वारं (उद्विग्न॰) उव्विग्गो उव्विण्णो अवन्द्र इति किम्, वन्द्र, संस्कृतसमोऽयं प्राकृतशब्दः ॥ अनोत्तरेण विकल्पोऽपि न भवति, निषेधसामर्थ्यात् ॥

द्रे रो नवा ॥ २ ॥ ८० ॥

द्रशब्दे रेफस्य वा लुग् भवति । चदो चद्रो, रुद्दो रुद्रो । भद्द

---

१ अधतः सूक्ष्मेषा ॥ १ ॥ ११८ ॥ इति सूक्ष्माने स ॥ २ श्लक्ष्णम् ॥

भद्र, समुद्दो समुद्रो । ह्रदशब्दस्य स्थितिपरिवृत्तौ द्रह इति
वत्र, द्रहो दहो ॥ केचिद् रलोप नेच्छन्ति ॥ द्रहशब्दमपि क
सस्कृत मन्यते ॥ वोद्रहादयस्तु तरुणपुरुषादिवाचका नित्य रे
सयुक्ता देश्या एव ॥ सिर्क्खतु वोद्रहाउ, वोद्रह द्रहम्मि पडिआ

धात्र्याम् ॥ २ ॥ ८१ ॥

धात्रीशब्दे रस्य लुग् वा भवति ॥ धत्ती ॥ ह्रस्वात्प्रागेव रलो
धाई पक्षे धारी ॥

तीक्ष्णे णः ॥ २ ॥ ८२ ॥

तीक्ष्णशब्दे णस्य लुग् वा भवति ॥ तिक्ख तिण्ह ॥

ज्ञो ञः ॥ २ ॥ ८३ ॥

ज्ञसम्बन्धिनो ञकारस्य लुग् वा भवति ॥ जाण णाण, सव्वज्ञे
सव्वण्णू ॥ अप्पज्ञो अप्पण्णू, दइवज्ञो दइवण्णू, इगिअज्ञो इगिअण्णू
मणोज्ञ मणोण्ण, अहिज्ञो अहिण्णू [1] । पज्ञा पण्णा, अज्ञा अण्णा,
सज्ञा सण्णा/कचित्र भवति । विण्णाण ॥

दशार्हे ॥ २ ॥ ८५ ॥

पृथग् योगात् वेति निवृत्त, दशार्हे हस्य लुग् भवति ॥ दसारो ॥

आदे. श्मश्रुश्मशाने ॥ २ ॥ ८६ ॥

अनयोरादेर्लुग् भवति ॥ मासू, मसू, मस्सू ॥ मसाण, आर्षे
श्मशानशब्दस्य सीआण ॥ सुसाण ।

श्चो हरिश्चन्द्रे ॥ २ ॥ ८७ ॥

---

१ शिक्षन्तु वोद्रहा ॥ वोद्रहद्रहे पतिता ॥ २ वक्रादावन्त ॥ १ ॥ २६ ॥ इति
अनुस्वारागम ॥

हरिश्चन्द्रशब्दे श्च इत्यस्य लुग् भवति ॥ हरि अदो ॥

**रात्रौ वा ॥ २ ॥ ८८ ॥**

रात्रिशब्दे सयुक्तस्य लुग् वा भवति ॥ राई रत्ती ॥

**द्वितीयतुर्ययोरुपरि पूर्व. ॥ २ ॥ ९० ॥**

द्वितीयतुर्ययोः द्वित्वप्रसङ्गे उपरि पूर्वो भवतः ॥ द्वितीयस्योपरि प्रथम' । चतुर्थस्योपरि तृतीय इत्यर्थः ॥ शेप' ॥ वक्खाण, वेग्घो, ग्घार[1] मुच्छा, निज्झरो, कट्ठ, तित्थ, निद्धणो, गुंप्फ[2] निब्भरो ॥ आदेश' ॥ जक्खो, घस्य नास्ति । अच्छी मज्झ, पट्ठी, वुड्ढो, हत्थो, आलिद्धो,[3] भन[4] पुप्फ, भिंब्भलो ॥ तैलादौ ॥ २ ॥ ९८ ॥ द्वित्वे ओक्खल ॥ सेवादौ ॥ २ ॥ ९९ ॥ नक्खा ॥ ( नहा ) समासे, कैडढओ कइ-धओ ॥ द्वित्व इत्येव, खाओ ॥

**दीर्घे वा ॥ २ ॥ ९१ ॥**

दीर्घशब्दे शेपस्य घस्य उपरि पूर्वो वा भवति ॥ दिग्घो दीहो ॥

**न दीर्घानुस्वारात् ॥ २ ॥ ९२ ॥**

दीर्घानुस्वाराभ्या लाक्षणिकाभ्याम् अलाक्षणिकाभ्या च परयो' शेपादेशयो द्वित्व न भवति ॥ छूढो नीसासो फासो ॥ अलाक्ष-णिक –( पार्श्व ) पासं ( शीर्ष ) सीस ( ईश्वर. ) ईसरो ( द्वेष्य. ) वेसो ( लास्य ) लास ( आस्य ) आस ( प्रेष्य ) पेसो ( अवमा-ल्यम् ) ओमाल ( आज्ञा ) आणा ( आज्ञप्ति[5] ) आणत्ती ( आज्ञ-

---

१ व्याघ्र ॥ २ गुल्फम् ३ आश्लिष्ट , आश्लिष्ट लर्दा ॥ २ ॥ ४९ ॥ इतिटस द' ॥ ४ विहले वो भश्च ॥ इति घस्य भ ॥ ५ कपिप्पल ॥

पनम् ) आणवण ॥ अनुस्वारात् ( त्र्यस्त्र ) तस, अलाक्षणिकः संज्ञा विंझो कसालो ॥

रहोः ॥ २ ॥ ९३ ॥

रेफहकारयो द्वित्वं न भवति ॥ रेफः शेषो नास्ति ॥ आदेशः। सुन्देर, बम्हचेर, पेरत ॥ शेषस्य हस, विहलो ॥ आदेशस्य कहावणो ॥

धृष्टद्युम्ने णः ॥ २ ॥ ९४ ॥

धृष्टद्युम्नशब्दे आदेशस्य णस्य द्वित्वं न भवति ॥ धट्ठज्जुणो ॥

कर्णिकारे वा ॥ २ ॥ ९५ ॥

कर्णिकारशब्दे शेषस्य णस्य द्वित्वं वा न भवति ॥ कणिआरो कण्णिआरो ॥

दृप्ते ॥ २ ॥ ९६ ॥

दृप्तशब्दे शेषस्य द्वित्वं न भवति ॥ दरिअ-सीहेण ॥

समासे वा ॥ २ ॥ ९७ ॥

शेषादेशयोः समासे द्वित्वं वा भवति ॥ नइग्गामो नइगामो कुसुमप्पयरो कुसुमपयरो देवत्थुई देवथुई हरक्खंदा हरखंदा आणालक्खम्भो, आणालखम्भो ॥ बहुलाधिकारात् अशेषादेशयोरपि स प्पिवासो, स-पिवासो, बद्धप्फलो, बद्धफलो, मलय सिहर क्खण्ड, मलयसिहर-खंड, पम्मुक्क, पमुक्क, अद्दसण, अदंसणं, पडिक्कूल, पडिकूल, तेल्लोक, तेलोक, इत्यादि ॥

तैलादौ ॥ २ ॥ ९८ ॥

तैलादिषु अनादौ यथादर्शनम् अन्त्यस्यानन्त्यस्य च व्यञ्जनस्य

द्वित्वं भवति ॥ तेल्लं मण्डुक्को वेइल्लं उज्जू विड्डा वहुत्तं ॥ अनन्त्यस्य सोत्तं पेम्मं जुव्वणं ॥ आर्षे पडिसोओ विस्सोअसिआ ॥

सेवादौ वा ॥ २ ॥ ९९ ॥

सेवादिषु अनादौ यथा दर्शनम् अन्त्यस्यानन्त्यस्य च द्वित्वं वा भवति ॥ सेव्वा सेवा नेड्डं नीडं नक्खा नहा निहित्तो निहिओ वाहित्तो वाहिओ माउक्कं माउअं एक्को एओ कोउहल्लं कोउहलं वाउल्लो वाउलो थुल्लो थोरो हुत्तं हूअं दइव्वं दइवं तुण्हिक्को तुण्हिओ मुक्को मूओ खण्णू खाणू थिण्णं थीणं ॥ अनन्त्यस्य अम्हक्केरं अम्हकेरं तव्वेअ तवेअ सोच्चिअ सोचिअ ॥

शार्ङ्गे ङात्पूर्वोऽत् ॥ २ ॥ १०० ॥

शार्ङ्गे ङात्पूर्वोऽदागमो भवति ॥ सारंग ॥

क्ष्माश्लाघारत्नेऽन्त्यव्यञ्जनात् ॥ २ ॥ १०१ ॥

एषु संयुक्तस्य यद् अन्त्यव्यञ्जनं तस्मात्पूर्वोऽदागमो भवति । छमा सलाहा रयणं ॥ आर्षे सूक्ष्मेऽपि सुहुमं ॥

स्नेहाग्न्योर्वा ॥ २ ॥ १०२ ॥

अनयोः संयुक्तस्य अन्त्यव्यञ्जनात्पूर्वोऽकारागमो वा भवति ॥ सणेहो नेहो अगणी अग्गी ॥

प्लक्षे लात् ॥ २ ॥ १०३ ॥

---

१ तैल मण्डूक विचकिल ऋजु बीडा प्रभूत स्रोतस् प्रेमन् यौवन इति संस्कृतम् ॥
२ सेवा नीड नख निहित व्याहृत मृदुक एक कुतूहल व्याकुल स्थूल हूत दैव तूष्णीक मूक स्थाणु स्त्यान अस्मदीय चैव चिअ इत्यादि

प्लक्षशब्दे संयुक्तस्य अन्त्यव्यञ्जनात् लात्पूर्वोऽदागमो भवति ॥ पलक्खो ॥

ईश्रीह्रीकृत्स्नक्रिया दिष्ट्यास्वित् ॥ २ ॥ १०४ ॥

एषु संयुक्तस्य अन्त्यव्यञ्जनात्पूर्वं इकाराऽऽगमो भवति ॥ ई अरिहइ अरिहा गरिहा वरिहो ॥ श्री ॥ सिरी ॥ ह्री ॥ हिरी ॥ हिरीओ अहिरीओ ॥ कृत्स्नः ॥ कसिणो (क्रिया) किरिआ ॥ आर्षे तु 'हय नाण कियाहीण, ॥ दिष्ट्या दिट्ठिआ ॥

शर्षतप्तवज्रे वा ॥ २ ॥ १०५ ॥

शर्षयोः तप्तवज्रयोश्च संयुक्तस्य अन्त्यव्यञ्जनात्पूर्वं इदागमो वा भवति ॥ र्श ॥ आयरिसो, आयसो सुंदरिसणो सुदसणो दंरिसण दमण ॥ र्ष ॥ वरिस वास, वरिसा वासा, वरिससय वाससय ॥ व्यवस्थितविभाषया क्वचिन्नित्य, परामरिसो हरिसो अमरिसो ॥ तप्त ॥ तविओ तत्तो ॥ वज्र ॥ वइर वज्ज ॥ [illegible]

लात् ॥ २ ॥ १०६ ॥

संयुक्तस्य अन्त्यव्यञ्जनात् लात्पूर्वं इद् भवति ॥ किलिन्नं किलिट्ठ सिलिट्ठ पिलुट्ठ पिलोसो सिलिम्हो सिलेसो सुक्किल सुइल सिलोओ किलेसो अम्बिलं गिलाइ गिलाण मिलाइ मिलाण किलिम्मइ किलन्त ॥ क्वचिन्न भवति ॥ कमो पवो विप्पवो सुक्कपक्खो (उत्प्लावयति) उप्पावेइ ॥ उप्लस

१ आदर्श ॥ २ सुदर्शन ॥ ३ दर्शन ॥ ४ हृष्म् ॥ ५ रोष ॥ ६ क्लेश्मन् ७ शुक्ल ॥ १ सवादा/ था ॥ २५५ ॥ इति द्वित्वविकल्पाद् पक्षे के लोपे यति सुइल ॥ ८ क्लाम्यति ॥ ९ क्रम ॥सवत्रलवरा मध दे इति सम्य इद् ॥

स्याद्‌भव्यचैत्यचौर्यसमेषु यात् ॥ २ ॥ १०७ ॥

स्यादादिषु चौर्यशब्देन समेषु च सयुक्तस्य यात्पूर्व इद् भवति ॥
ाआ, सिआवाओ भविओ, चेइअ/ चौर्यसमः ॥ चोरिअ, थेरिअ स्थि
ारिआ, गम्भीरिअ, गहीरिअ, आयरिओ, सुन्दरिय, सोरिअ
ारिअ, धरिअ, सूरिओ, धीरिअ बम्हचरिअ, ॥

स्निग्धे वादितौ ॥ २ ॥ १०९ ॥

स्निग्धे सयुक्तस्य नात्पूर्वौ अदितौ वा भवतः ॥ सणिद्ध सिणिद्ध
क्षे निद्ध ॥

कृष्णे वर्णे वा ॥ २ ॥ ११० ॥

वर्णवाचिनि कृष्णे सयुक्तस्य अन्त्यव्यञ्जनात्पूर्वो अदितौ वा
वतः ॥ कसणो कसिणो कण्हो ॥ वर्ण इति किम् ॥ विष्णौ,
ण्हो ॥

उच्चार्हति ॥ २ ॥ १११ ॥

अर्हत् शब्दे सयुक्तस्य अन्त्यव्यञ्जनात्पूर्व उद् अदिदौ च
ावतः ॥ अरुहो अरहो अरिहो ॥ अरहतो अरहतो अरिहतो ॥

तन्वीतुल्येषु ॥ २ ॥ ११३ ॥

उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्या' ॥ तेषु सयुक्तस्य अन्त्य-
यञ्जनात्पूर्व उकारो भवति ॥ तणुवी, लहुवी, गरुवी, बहुवी,
ुहुवी, मउवी, क्वचिदन्यत्रापि ( स्रुघ्न ) सुरुग्घ ॥ आर्षे ( सुक्ष्म )
ुहुम ॥

एकस्वरे श्वस्वे ॥ २ ॥ ११४ ॥

एकस्वरे पदे यौ श्वस्व इत्येतौ तयोरन्त्यव्यञ्जनात्पूर्व उद्

भवति ॥ (श्वःकृत) सुवेकय ॥ (स्वे जना[1]) सुवेजणा ॥ इति किं (स्वजनः) सयणो ॥

ज्यायामीत् ॥ २ ॥ ११५ ॥

ज्याशब्देऽन्त्यव्यञ्जनात्पूर्व ईद् भवति ॥ जीआ ॥

करेणूवाराणस्यो रणोर्व्यत्ययः ॥ २ ॥ ११६ ॥

अनयो रेफणकारयोर्व्यत्यय स्थितिपरिवृत्तिर्भवति ॥ कणेरु वाणारसी ॥ स्त्रीलिङ्गनिर्देशात् पुंसि न भवति । एसो करेणू ॥

आलाने लनोः ॥ २ ॥ ११७ ॥

आलानशब्दे लनोर्व्यत्ययो भवति ॥ आणालो आणालक्खभो ॥

अचलपुरे चलोः ॥ २ ॥ ११८ ॥

अचलपुरशब्दे चलयोर्व्यत्ययो भवति ॥ अलचपुरं ॥

ह्रदे ह्दो[2] ॥ २ ॥ १२० ॥

ह्रदशब्दे हकारदकारयोर्व्यत्ययो भवति ॥ द्रहो ॥ आर्षे हरए महपुण्डरिए ॥

हरिताले रलोर्न वा ॥ २ ॥ १२१ ॥

हरितालशब्दे रकारलकारयोर्व्यत्ययो वा भवति ॥ हलिआरो, हरिआलो ॥

लघुके लहो[3] ॥ २ ॥ १२२ ॥

लघुकशब्दे घस हत्वे कृते लहोर्व्यत्ययो वा भवति ॥ हलुअं ॥ लहुअं ॥ घस्य व्यत्यये कृते पदादित्वात् हो न प्राप्नोतीति हकरणम् ॥

---

१ स्वे जना, इति पदद्वयस्य ग्रहणम् ॥ २ द्रहोत्र ॥ २ ॥ ८० ॥ इति रेफलोपाभावः ॥ ३ ह्रदे महापुण्डरीके ॥

ह्ये ह्योः ॥ २ ॥ १२४ ॥

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा भवति, (गुह्य) गुय्ह, गुज्झ ॥ (सह्यः) सय्हो सज्झो ॥

स्तोकस्य थोक्क थोव थेवाः ॥ २ ॥ १२५ ॥

स्तोकशब्दस्य एते त्रय आदेशा वा भवन्ति ॥ थोक्क थोव थेव । पक्षे थोअ ॥

दुहितृभगिन्योर्धूआ वहिण्यौ ॥ २ ॥ १२६ ॥

अनयोरेतावादेशौ वा भवतः ॥ धूआ दुहिआ ॥ वहिणी भइणी ॥

वृक्षक्षिप्तयो रुक्खछूढौ ॥ २ ॥ १२७ ॥

वृक्षक्षिप्तयोर्यथासंख्यं रुक्ख छूढ इत्यादेशौ वा भवतः ॥ रुक्खो, वच्छो, छूढ, खित्त ॥ उच्छूढ उक्खित्त ॥

वनिताया विलया ॥ २ ॥ १२८ ॥

वनिताशब्दस्य विलया इत्यादेशो वा भवति, विलया वणिया विलयेति संस्कृतेऽपि केचित् ॥

गौणस्येषतः कूरः ॥ २ ॥ १२९ ॥

ईषत् शब्दस्य गौणस्य कूर इत्यादेशो वा भवति । चिंचव्व कूर पिक्का ॥ पक्षे ईसि ॥

स्त्रिया इत्थी ॥ २ ॥ १३० ॥

स्त्रीशब्दस्य इत्थी इत्यादेशो वा भवति ॥ इत्थी थी ॥

धृतेर्दिहिः ॥ २ ॥ १३१ ॥

धृतिशब्दस्य दिहि रित्यादेशो वा भवति ॥ दिही धिई ॥

---

१ चिंचा इव ईषत् पक्वा ॥ 'पक्काङ्गारललाटया' इति अकारान्त इदवम् ॥

मार्जारस्य मञ्जरवञ्जरौ ॥ २ ॥ १३२ ॥

मार्जारशब्दस्य मञ्जरवञ्जर इत्यादेशौ वा भवतः ॥ मञ्जरो वञ्जरो पक्षे मजारो ॥

वैडूर्यस्य वेरुलिअ ॥ २ ॥ १३३ ॥

वैडूर्यशब्दस्य वेरुलिअ इत्यादेशो वा भवति । वेरुलिअं वेडुज्जं।

एण्हि एत्ताहे इदानीमः ॥ २ ॥ १३४ ॥

इदानीं शब्दस्य एतावादेशौ वा भवतः ॥ एण्हि एत्ताहे इयाणिं।

पूर्वस्य पुरिमः ॥ २ ॥ १३५ ॥

पूर्वस्य स्थाने पुरिम इत्यादेशो वा भवति ॥ पुरिम पुव्व ॥

त्रस्तस्य हित्थतट्ठौ ॥ २ ॥ १३६ ॥

त्रस्तशब्दस्य हित्थ तट्ठ इत्यादेशौ वा भवतः ॥ हित्थ, तट्ठ, तत्थ।

बृहस्पतौ बहो भयः ॥ २ ॥ १३७ ॥ भयभीत

बृहस्पतिशब्दे वह इत्यस्यावयवस्य भय इत्यादेशो वा भवति। भयस्सई, भयप्फई, भयप्पई, पक्षे वहस्सई वहप्फई वहप्पई वाबृहस्पतौ ॥ १ ॥ १३८ ॥ इति इकारोकारं च बिहस्सई बिहप्फई बिहप्पई ॥ बुहस्सई बुहप्फई बुहप्पई ॥

मलिनोभयशुक्तिछुप्तारब्धपदातेर्मइलावहसिप्पिछिक्काढत्तपाइक्कं ॥ २ ॥ १३८ ॥

मलिनादीनां यथा सख्य मइलादय आदेशा वा भवन्ति ॥ (मलिन) मइल मलिण, (उभय) अवह ॥ उवह इत्यपि केचित् ॥ अवहो आसं । उभयबल ॥ आर्षे उभयोकाल ॥ शुक्ति ॥ सिप्पी सुत्ती, ॥

छुप्तः ॥ छिक्को छुत्तो, ॥ आरब्धः ॥ आढत्तो आरद्धो ॥ पदातिः ॥ पाइक्को पयाई ॥

दंष्ट्राया दाढा ॥ २ ॥ १३९ ॥

पृथग् योगाद् वेति निवृत्तम् ॥ दंष्ट्राशब्दस्य दाढा इत्यादेशो भवति ॥ दाढा, अयम् संस्कृतेऽपि ॥

बहिसो बाहिं बाहिरौ ॥ २ ॥ १४० ॥

बहिः शब्दस्य बाहिं बाहिर इत्यादेशौ भवतः ॥ बाहिं बाहिर ॥

अधसो हेट्ठ ॥ २ ॥ १४१ ॥

अधश्शब्दस्य हेट्ठ इत्ययं आदेशो भवति ॥ हेट्ठ ॥

मातृपितुः स्वसु: सिआछौ ॥ २ ॥ १४२ ॥

मातृपितृभ्या परस्य स्वसृशब्दस्य सिआछा इत्यादेशौ भवतः । माउ सिआ, माउच्छा, पिउसिआ पिउच्छा ॥ भुआ

मासी

तिर्यचस्तिरिच्छिः ॥ २ ॥ १४३ ॥

तिर्यच्छब्दस्य तिरिच्छि इत्यादेशो भवति ॥ तिरिच्छि पेच्छइ ॥ आर्षे, तिरिआ इत्यादेशोऽपि, तिरिआ ॥

गृहस्य घरोऽपतौ ॥ २ ॥ १४४ ॥

गृहशब्दस्य घर इत्यादेशो भवति, पतिशब्दश्चेत्परो न भवति ॥ घरो, घरसामी, रायहर, अपताविति किम्, गहवई ॥

शीलाद्यर्थस्येरः ॥ २ ॥ १४५ ॥

शीलधर्मसाध्वर्थे विहितस्य प्रत्ययस्य इर इत्यादेशो भवति, ( हसनशील ) हसिरो, रोविरो, लज्जिरो, जम्पिरो, वेविरो भमिरो,

उच्चारयासलेने कास्वभाव

ऊमासिरो, ॥ केचन तून एव इरमाहु॰, तेषां नमिरगमिरादयो
सिध्यन्ति ॥ तूनोऽत्र रादिना बाधितत्वात् ॥

क्त्व तुमत्तूणतुआणाः ॥ २ ॥ १४६ ॥

क्त्वाप्रत्ययस्य तुम् अत् तूण तुआण इत्येते आदेशा भवन्ति।
तुम् ॥ दट्ठु मोत्तु ॥ अत् ॥ भमिअ रमिअ ॥ तूण ॥ घेत्तूण
काऊण, ॥ तुआण ॥ भेत्तुआण, सोउआण ॥ वदित्तु इत्यनुस्वार
लोपात् ॥ वन्दित्ता, इति तु सिद्धसंस्कृतस्यैव वलोपेन ॥ कट्टु इति
तु आर्षे ॥

इदमर्थस्य केरः ॥ २ ॥ १४७ ॥

इदमर्थस्य प्रत्ययस्य केर इत्यादेशो भवति । (युष्मदीय॰) तुम्ह
केरो (अस्मदीय) अम्हकेरो, नच भवति, मईय पक्खे पाणि
णीया ॥

परराजभ्यां क्कडिक्कौ च ॥ २ ॥ १४८ ॥

पर राजन् इत्येताभ्यां परस्य इदमर्थस्य प्रत्ययस्य यथासंख्
संयुक्तो, को डित् इक्कश्चादेशौ भवतः ॥ चकारात् केरश्च, (पर
कीय) पारक्क, परक्क, पारकेर, (राजकीय) राइक्क, रायकेर ॥

युष्मदस्मदोऽञ एच्चय ॥ २ ॥ १४९ ॥

आभ्यां परस्येदमर्थस्य अञ॰ एच्चय इत्यादेशो भवति ॥ (युष्मा
कमिदं, यौष्माकम्) तुम्हेच्चय ॥ एवम् अम्हेच्चय ॥

वते र्व्वः ॥ २ ॥ १५० ॥

वते प्रत्ययस्य द्विरुक्तो वो भवति ॥ महुरव्वपाडलिउत्ते पासाया ॥

१ मथुरावत् पाटलिपुत्रे प्रासादाः ॥

सर्वाङ्गादीनस्येकः ॥ २ ॥ १५१ ॥

सर्वाङ्गात् सर्वादेः पथ्यङ्ग ( हे० ७०१ ) इत्यादिना विहित-ईनस्य स्थाने इक इत्यादेशो भवति, ( सर्वाङ्गीणः ) सवङ्गिओ ॥

पथो णस्येकट् ॥ २ ॥ १५२ ॥

नित्य ण' पन्थश्च ( हे० ६०४ ) इति यः पथो णो विहित-स्तस्य इकट् भवति ॥ ( पान्थ' ) पहिओ ॥

ईयस्यात्मनो णयः ॥ २ ॥ १५३ ॥

आत्मनः परस्य ईयस्य णय इत्यादेशो भवति ॥ ( आत्मीयम् ) अप्पणय ॥

त्वस्य डिमात्तणौ वा ॥ २ ॥ १५४ ॥

त्वप्रत्ययस्य डिमा त्तण इत्यादेशौ वा भवतः ॥ पीणिमा, पुप्फिमा, पीणत्तण पुप्फत्तण ॥ पक्षे पीणत्तं पुप्फत्त, 'इम्न' पृथ्वा-दिषु नियतत्वात् तदन्यप्रत्ययान्तेषु अस्य विधिः, पीनता इत्यस्य प्राकृते पीणया इति भवति ॥ पीणदा इति तु भाषान्तरे ॥ तेनेह-तलो दा न क्रियते ॥

अनङ्कोठात् तैलस्य डेल्लः ॥ २ ॥ १५५ ॥

अङ्कोठवर्जितात् शब्दात्परस्य तैलप्रत्ययस्य डेल्ल इत्यादेशो भवति ॥ सुरहि जलेण कडुएल्ल, अनङ्कोठादिति किम् अङ्कोल्लतेल्ल ॥

यत्तदेतदोऽतोरित्तिअ एतल्लुक् च ॥ २ ॥ १५६ ॥

एभ्यः परस्य डावादेरतो परिमाणार्थस्य इत्तिअ इत्यादेशो,

---

१ सुरभिजलेन कटुतैलम् ॥

यावान्

भवति, एतदो लुक् च (यावत्) जित्तिअं, (तावत्) तित्तिअं (एतावत्) इत्तिअं ॥ एतावान्

इद किमश्च डेत्तिअ डेत्तिल डेद्दहाः ॥ २ ॥ ॥१५७॥

इद किंभ्यां यत्तदेतद्भ्यश्च परस्यातो' डावतोर्वा डित् एत्तिअ एत्तिल एद्दह इत्यादेशा भवन्ति ॥ एतल्लुक् च ॥ (इयत्) एत्तिअं एत्तिल एद्दह (कियत्) केत्तिअं केत्तिल केद्दह (यावत्) जेत्तिअं जेत्तिल, जेद्दह (तावत्) तेत्तिअं, तेत्तिल, तेद्दह (एतावत्) एत्तिअ, एत्तिल, एद्दह ॥

कृत्वसो हुत्तं ॥ २ ॥ १५८ ॥

वारेकृत्वस । हे० ७०२ ॥ इति य' कृत्वस् प्रत्ययो विहितः तस्य हुत्तमित्यादेशो भवति ॥ सयहुत्तं, सहस्सहुत्तं ॥ कथं प्रियाभिमुख पियहुत्तं ॥ अभिमुखार्थेन हुत्तशब्देन भविष्यति ॥

आल्विल्लोल्लालवन्तमन्तेत्तेरमणा मतोः ॥ २ ॥ ५९ ॥

आलु इत्यादयो नव आदेशा मतो स्थाने यथा प्रयोग भवन्ति आलु ॥ नेहालू, दयालू, ईसालू, लज्जालुआ, ॥ इल्ल ॥ सोहिल्लो छाइल्लो, जामइल्लो ॥ उल्ल ॥ विआरुल्लो, मंसुल्लो, दप्पुल्लो आल ॥ सद्दालो, जडालो, फडालो, रसालो, जोण्हालो ॥ वन्त ॥ धणवन्तो, भत्तिवन्तो ॥ मन्त ॥ हणुमन्तो, सिरिमन्तो, पुण्णमन्तो ॥ इत्त ॥ कव्वइत्तो, माणइत्तो, ॥ इर ॥ गव्विरो, रेहिरो, ॥ मण ॥ धणमणो, केचिन्मादेशमपीच्छन्ति ॥ हणुमा ॥ मतोरिति किं धणी ।

१ शोभावान् ॥ २ छायावान् ॥ ३ यामवान् ॥ ४ विकारवान् ॥ ५ श्मश्रुवान् ६ फटावान् ॥ ७ ज्योत्स्नावान् ॥ ८ काव्यवान् ॥

त्तो दो तसो वा ॥ २ ॥ १६० ॥

तसः प्रत्ययस्य स्थाने त्तोदो इत्यादेशौ वा भवत' ॥ सव्वत्तो सव्वदो एकत्तो एकदो अन्नत्तो अन्नदो कत्तो कदो जत्तो जदो तत्तो तदो इत्तो इदो ॥ पक्षे ॥

अतो डो विसर्गस्य ॥ १ ॥ ३७ ॥

संस्कृतलक्षणोत्पन्नस्य अत.परस्य विसर्गस्य स्थाने डो इत्यादेशो भवति ॥ (सर्वत') सव्वओ (पुरत') पुरओ (अग्रतः) अग्गओ (मार्गत') मग्गओ ॥ एव सिद्धावस्थापेक्षया (भवतः) भवओ (भवन्त') भवन्तो (सन्तः) सन्तो (कुत') कुदो, इत्यादिरपि ॥

त्रपो हिहत्थाः ॥ २ ॥ १६१ ॥

त्रप्प्रत्ययस्य एते भवन्ति (यत्र) जहि जह जत्थ (तत्र) तहि तह, तत्थ (कुत्र) कहि कह कत्थ (अन्यत्र) अन्नहि अन्नह अन्नत्थ ॥

वैकाद्दः सि सिअ इआः ॥ २ ॥ १६२ ॥

एकशब्दात्परस्य दाप्रत्ययस्य सि सिअ इआ इत्यादेशा वा भवन्ति ॥ (एकदा) एकसि एक्कसिअ एकइआ ॥ पक्षे ॥ एगया ॥

डिल्ल-डुल्लौ भवे ॥ २ ॥ १६३ ॥

भवार्थे नाम्न' परौ इल्ल उल्ल इत्येतौ डितौ प्रत्ययौ भवत' ॥ गामिल्लिआ पुरिल्ल हेट्ठिल्ल उवरिल्ल अप्पुल्ल ॥ आल्वाल[1] अपीच्छन्ति अन्ये ॥

---

[1] आत्मनि भव इत्यर्थ ॥

स्वार्थे कश्च वा ॥ २ ॥ १६४ ॥

स्वार्थे कश्चकारादिल्लोल्लौ डितौ प्रत्ययौ वा भवत.॥क ॥ कुङ्कुमपिंजरय, चन्दओ, गयणयम्मि, धरणीहर पक्खुब्भन्तय । दुंहिअए, रामहिअयए, इहय, आलेट्ठुअ, आश्लेष्टुमित्यर्थे. ॥ द्विर्भवति, बहुअय ॥ ककारोच्चारण पैशाचिकभापार्थं यथा वतनक वतनक समप्पेत्तून ॥ इल्ल ॥ निज्जिआसोअपल्लविल्लेण ॥ पुरिल्लो, पुरा पुरो वा ॥ उल्ल ॥ मेहपिउल्लओ, मुहुल्ल, हत्थुल्ला ॥ पक्षे । चन्दो गयण ॥ इह आलेट्ठु बहु बहुअं मुह हत्था ॥ कुत्सादिविशिष्टे तु सस्कृतवदेव कप् सिद्ध' ॥ यावादिलक्षण. क. प्रतिनियतविषय एवेति वचनम् ॥

ल्लो नवैकाद् वा ॥ २ ॥ १६५ ॥

आभ्या स्वार्थे सयुक्तो ल्लो वा भवति ॥ नवल्लो एकल्लो सेवादित्वात्कस्य द्वित्वे एक्कल्लो, पक्षे नवो एको एओ ॥

उपरे' सव्याने ॥ २ ॥ १६६ ॥

सव्यानेऽर्थे वर्त्तमानादुपरि शब्दात् स्वार्थे ल्लो भवति ॥ अवरिल्लो ॥ सव्यान इति किम् अवरिं ॥

भ्रुवो मया डमया ॥ २ ॥ १६७ ॥

भ्रूशब्दात्स्वार्थे मया डमया इत्येतौ प्रत्ययौ भवत.॥भुमया भमया॥

शनैसो डियम् ॥ २ ॥ १६८

१ धरणीधरपक्षोद्भ्रान्तम् ॥ २ दु खित रामहृदय ॥ ३ वदनके वदन राज । ४ निर्जिताशोकपल्लवेन ॥ ५ मघपितृक ॥ ६ मुखम् ॥ ७ हस्ता ॥ ८ 'पाद ॥१।१।१०८॥ इति उकारस्यात्वम् ॥

शनैश्शब्दात्स्वार्थे डिअम् भवति ॥ सणिअमवगूढो ॥

मनाको नवा डय च ॥ २ ॥ १६९ ॥

मनाक् शब्दात्स्वार्थे डय डिअम् च प्रत्ययो वा भवति ॥ मणय मणिय ॥ पक्षे मणा ॥

मिश्राड्डालिअ॰ ॥ २ ॥ १७० ॥

मिश्रशब्दात्स्वार्थे डालिअ॰ प्रत्ययो वा भवति । मीसालिअ, पक्षे मीस ॥ मिला हुआ

रो दीर्घात् ॥ २ ॥ १७१ ॥

दीर्घशब्दात्स्वार्थे रो वा भवति । दीहर दीह ॥

त्वादे॰ सः ॥ ७२ ॥ १२ ॥

'भावेत्वतल् हे० ७१' इत्यादिना विहितात्त्वादे॰ परः स्वार्थे स एव त्वादिर्नो भवति ( मृदुकत्वेन ) मउअत्तयाइ, अतिशायिका त्वातिशायिकः संस्कृतवदेव सिद्ध॰, जिट्ठयरो कणिट्ठयरो ॥

विद्युत्पत्रपीतान्धाल्लः ॥ २ ॥ १७३ ॥

एभ्य स्वार्थे लो वा भवति, विज्जुला, पत्तल, पीवॅल, पीअल, अन्धलो ॥ पक्षे विज्जु, पत्त, पीअ, अन्धो, कथ जमल ? यमल-मिति संस्कृतशब्दाद् भविष्यति ॥ जोड़ा युग्म

गोणादय॰ ॥ २ ॥ १७४ ॥

गोणादय॰ शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुल निपात्यन्ते, ( गौ ) गोणो गावी ( गाव॰ ) गावीओ ( बलीवर्द॰ )

१ पीते वो लो वा, इति तस्य व ।

चइल्लो ( आपः ) आऊ ( पञ्चपञ्चाशत् ) पचावण्णा पणपन्ना ( त्रिप ञ्चाशत् ) तेवण्णा ( त्रिचत्वारिंशत् ) तेआलीसा ( व्युत्सर्ग ) विउ सग्गो ( व्युत्सर्जन ) वोसिरण ( वहिर्मैथुन वा ) बहिद्धा ( कार्ये ) णामुक्कसिअं । ( क्वचित् ) कत्थइ ( उद्वहति ) मुव्वहइ ( अपस्मार. ) वम्हलो ( उत्पल ) कन्दुट्ट ( धिक्धिक् ) छिछि, द्धिद्धि, ( धिगस्तु ) धिरत्थु ( प्रतिस्पर्धी ) पडिसिद्धी, पाडिसिद्धी, ( स्थासकः ) चच्चिक ( निलय' ) निहेलण ( मघवान् ) मघोणो ( साक्षी ) सक्खिणो ( जन्म ) जम्मण ( महान् ) महन्तो ( भवान् ) भवन्तो ( आशीः ) आसीसा । क्वचित् ह्रस्व ड्ढमा ( बृहत्तर ) वड्डयर ( हिमोर') भिमोरो ह्रस्व ड्ड. ( क्षुल्लक' ) खुड्डओ, घोषाणाम् अग्रेतन' ( गायनः ) घायणो ( वड' ) वढो ( ककुदम् ) ककुध ( अकाण्डम् ) अत्थक्क ( लज्जावती ) लज्जालुइणी ( कुतूहल ) कुड्ड ( चुतः ) मायन्दो माकन्दशब्दः संस्कृतेऽपीत्यन्ये, ( विष्णु ) भट्टिओ ( श्मशान ) करसी ( असुरा' ) अगया ( खेल ) खेड्ड ( पौष्प रजः ) तिंगिच्छि ( दिनम् ) अल्ल ( समर्थः ) पक्कलो ( पण्डक' ) नेलच्छो ( कर्पासः ) पलही ( बली ) उज्जल्लो ( ताम्बूल ) झसुर ( पुंश्चली ) छिछई ( शाखा ) साहुली इत्यादि ॥ वाधिकारात्पक्षे यथादर्शनं गउओ इत्याद्यपि भवति, गोला गोआवरी, इति तु गोलागोदावरीभ्यां सिद्धम् ॥

भाषाशब्दाश्च आहित्थ लल्लक्क विड्डिर पचड्डिआ उप्पेहड मड प्फर पडिच्छिर अट्टमट्ट विहडप्फड उज्जल्ल हट्टप्फल इत्यादयो महाराष्ट्रविदर्भादिदेशप्रसिद्धा लोकतोऽवगन्तव्या. ॥ क्रियाशब्दाश्च अवयासइ फुम्फुल्लइ उप्फालेइ इत्यादयः ॥

अत एव च कृष्ट घृष्ट वाक्य विद्वस् वाचस्पति विष्टरश्रवस् प्रचेतस् प्रोक्त प्रोतादीना ॥ क्विबादिप्रत्ययान्ताना च अग्निचित्सोमसुत्सुग्लसुम्लेत्यादीना पूर्वै कविभिरप्रयुक्ताना प्रतीतिवैषम्यपर. प्रयोगो न कर्त्तव्यः ॥ शब्दान्तरैरेव तु तदर्थोऽभिधेय, यथा कृष्टः कुशलः, वाचस्पतिर्गुरु, विष्टरश्रवा. हरिरित्यादि ॥ घृष्टशब्दस्य तु सोपसर्गस्य प्रयोग इष्यते एव, [1]मन्दरयडपरिघट्ट, तद्दिअस निहट्टाणगो इत्यादि ॥ आर्षे तु यथा दर्शन सर्वम् अविरुद्धम् ॥ यथा घेट्ठा मट्ठा [2]विउमा सुअलक्खणाणुसारेण वक्कन्तरेसु अपुणो इत्यादि ॥ इति व्यञ्जनसन्धि ॥

अव्ययम् ॥ २ ॥ १७५ ॥

अधिकारोऽयम् । इत'पर ये वक्ष्यन्ते, आपादपरिसमाप्तेस्तेऽव्ययसञ्ज्ञका ज्ञातव्या. ॥

त वाक्योपन्यासे ॥ २ ॥ १७६ ॥

तमिति वाक्योपन्यासे प्रयोक्तव्यम् ॥ त [3]तिअसवदिमोक्ख ॥

आम अभ्युपगमे ॥ २ ॥ १७७ ॥

आमेत्यभ्युपगमे प्रयोक्तव्यम् ॥ आम [4]बहला वणोली ॥

णवि वैपरीत्ये ॥ २ ॥ १७८ ॥

णवीति वैपरीत्ये प्रयोक्तव्य, [5]णवि हा वणे ॥

पुणरुत्त कृतकरणे ॥ २ ॥ १७९ ॥

---

१ मन्दरतटपरिघृष्टम् ॥ तद्दिवसनिघृष्टानङ्ग ॥ २ घृष्टा, मृष्टा, विद्वांस, श्रुतलक्षणानुसारेण, वाक्यान्तरेषु, अपुन ॥ ३ त त्रिदशवन्दिमोक्षम् ॥ ४ आम बहला वनावली ॥ ५ णवि हा वने ॥ हा इति खेदे ॥

पुणरुत्तमिति कृतकरणे प्रयोक्तव्यम् ॥ अइ सुप्पइ पंसुलि णीः हेहिं अंगेहि पुणरुत्त ॥

हन्दि विषादविकल्पपश्चात्तापनिश्चयसत्ये ॥ २ ॥ १८०

हन्दि इति विषादादिषु प्रयोक्तव्यम् ॥

हन्दि चलणे नओ सो ण माणिओ, हन्दि हुज्ज एत्ताहे, हन्दि न होही भणिरी ॥ सा सिज्जइ, हन्दि तुह कज्जे ॥

हन्द च गृहाणार्थे ॥ २ ॥ १८१ ॥

हन्द हन्दि च गृहाणार्थे प्रयोक्तव्यम् ॥ हन्द पलोएसु इम हन्दि, गृहाणेत्यर्थः ॥

मिव पिव विव व्व व विअ इवार्थे वा ॥ २ ॥ १८२ ॥

एते इवार्थेऽव्ययसंज्ञका प्राकृते वा प्रयुज्यन्ते ॥ कुमुअं मिव चन्दणं पिव, हंसो विव, साअरो व्व खीरोओ, सेसस्स व निम्मोओ कमलं विअ, पक्षे नीलुप्पलमाला इव ॥

जेण तेण लक्षणे ॥ २ ॥ १८३ ॥

जेण तेण इत्येतौ लक्षणे प्रयोक्तव्यौ, भमररुअं जेण कमलवणं, भमररुअं तेण कमलवणं ॥

णइ चेअ चिअ च्च अवधारणे ॥ २ ॥ १८४ ॥

---

१ अपि स्पर्शति पांशुलि निर्गृहेण पुनरुक्तम् । वारं वारं स्पर्शनशीलार्थे ॥ २ हन्दि, इति विषादे, चरणे नतः स न मानितः ॥ ३ हन्दि भविष्यति इदानीं शपेथे भिद्यन्ते ॥ ४ हन्दि सा भगवती [illegible] इति पश्चात्तापः ॥ ५ हन्दि सा [illegible] इति निश्चय हन्दि सा तव कार्ये [illegible] इति सत्यम् ॥ ६ हन्द प्रलोकय [illegible] ॥ ७ कुमुदमिव ॥ ८ चन्दनमिव ॥ ९ हंस इव ॥ १० सागर इव क्षीरोदः ॥ ११ शेषस्य इव निर्मोकः ॥

एते अवधारणे प्रयोक्तव्या. ॥ गईए[1] णइ, ज चेअ मउलण से लोअणाण, अणुवद्ध[2] त चिअ कामिणीण, सेवादित्वाद् द्वित्वमपि, ते चिअ धन्ना, ते चेअ सुपुरिसा,। च। सै च य रूवेण, स च सीलेण॥

वले निर्धारणनिश्चययोः ॥ २ ॥ १८५ ॥

वले इति निर्धारणे निश्चये च प्रयोक्तव्यम् ॥ 'निर्धारणे, वले पुरिसो धणजओ खत्तियाण, 'निश्चये, वले मीहो, सिंह एवाय ॥

किरेर हिर किलार्थे वा ॥ २ ॥ १८६ ॥

किर इर हिर इत्येते किलार्थे वा प्रयोक्तव्याः ॥ कल्ल[5] किर खरहिअओ, तस्स इर, पिअवयसो हिर, पक्षे एव किल तेण सिविणए भणिआ ॥

णवर केवले ॥ २ ॥ १८७ ॥

केवलार्थे णवर इति प्रयोक्तव्यम्॥णवर पिआइ चिअ णिव्वडन्ति॥

आनन्तर्ये णवरि ॥ २ ॥ १८८ ॥

आनन्तर्ये णवरि इति प्रयोक्तव्यम् ॥ णवरि अ से रहुवइणा, केचित्तु केवलाऽनन्तर्यार्थयो', णवर-णवरि इत्येकमेव सूत्रं कुर्वते तन्मते उभावप्युभयार्थौ ॥

अलाहि निवारणे ॥ २ ॥ १८९ ॥

अलाहीति निवारणे प्रयोक्तव्यम् ॥ अलाहि किं वाइएण लेहेण ॥

---

१ गत्या एव ॥ २ अनुबद्ध तद एव कामिनीनाम् ॥ ३ स एव च रूपेण, स एव शीलेन ॥ ४ वले इति निधारण पुरुषो धनजय क्षत्रियाणाम् ॥ ५ कल्य किल खरहृदय ॥ ६ प्रियवयस्य किल ॥ ७ केवल प्रियाणि एव, नूपुर भवन्ति ॥ ८ णवरि (अनन्तर) च सद्द रघुपतिना ॥

अणणाइ नञर्थे ॥ २ ॥ १८० ॥

अणणाइ इत्येतौ नञोऽर्थे प्रयोक्तव्यौ ॥ अणेचिन्तिअमणुणन्त
णोइ करेमि रोस ॥

माइ मार्थे ॥ २ ॥ १९१ ॥

माइ इति मार्थे प्रयोक्तव्यम् ॥ माइ काहीअ रोस, मा कार्षी
रोपम् ॥

हद्धी निर्वेदे ॥ २ ॥ १९२ ॥

हद्धी इत्यव्ययमत एव निर्देशात्, हाधिक् शब्दादेशो वा निर्वे
प्रयोक्तव्यम् । हद्धी हद्धी हा धाह धाह ॥

वेव्वे भयवारणविषादे ॥ २ ॥ १९३ ॥

भयवारणविपादेषु वेव्वे इति प्रयोक्तव्यम् ॥

वेव्वेत्ति भये ॥ वेव्वे त्ति वारणे, जूरणे, अ वेव्वेत्ति ॥

उल्लाविरीइ वि तुह वेव्वेत्ति मयच्छि कि णेअ,

कि उल्लावेन्तीए, उअ जूरन्तीए कितु भीआए

उव्वाडिरीए वेव्वेत्ति तीए भणिअ न विम्हरिमो ॥

वेव्व चामन्त्रणे ॥ २ ॥ १९४ ॥

वेव्व वेव्वे च आमन्त्रणे प्रयोक्तव्ये ॥ वेव्व गोले, वेव्व मुरन्दले
वहसि पाणिअ ॥

---

१ अन चिन्तितम् अजानती ॥ २ न करोमि रोषम् ॥ ३ भय इति भा
भेव्व इति पाठ भेद न भेव्व इति ॥ उल्लापयन्त्या अपि तव यन्न नहि गृणाति [illegible]
भेदम् ॥ १ ॥ ४ किम् उल्लापयन्त्या उत [illegible] कि ॥ [illegible] इति
इति तया भणित न विस्मरामः ॥

**मामिहलाहले सख्या वा ॥ २ ॥ १९५ ॥**

एते सख्या आमन्त्रणे वा प्रयोक्तव्या. ॥ मामि सरिसक्खरा-णवि ॥ पणनहमाणस्स हला, हले हयासस्स, पक्षे सहि एरिसि च्चिअ गई ॥

**दे संमुखीकरणे च ॥ २ ॥ १९६ ॥**

संमुखीकरणे सख्या आमन्त्रणे च दे इति प्रयोक्तव्यम् ॥ दे पसिअ ताव सुन्दरि, दे आपसिअ निअत्तसु ॥

**हुं दानपृच्छानिवारणे ॥ २ ॥ १९७ ॥**

हुं इति दानादिषु प्रयोक्तव्यम् 'दाने' हुं गेण्ह अप्पणो च्चिअ ॥ पृच्छाया ॥ हुं साहसु सब्भाव, निवारणे ॥ हुं निल्लज्ज समोसर ॥

**हुखु निश्चयवितर्कसंभावनविस्मये ॥ २ ॥ १९८ ॥**

हुखु इत्येतौ निश्चयादिषु प्रयोक्तव्यौ ॥ 'निश्चये' तंपि हुं अच्छिन्नसिरी, त खु सिरीए रहस्स, 'वितर्के' ऊह, संशयो वा, 'ऊहे' न हु णवर संगहिआ, एँअ खु हसइ 'संशये' जलहरो खु धूमवडलो खु ॥ 'संभावने' तरीउ ण हु णवर इम, एँअ खु हसइ, 'विस्मये' को खु एसो सहस्ससिरो । बहुलाधिकारादनुस्वारात्परो हुर्न प्रयोक्तव्य ॥

---

१ मामि सदृशाक्षराणामपि ॥ २ हले हताशस्य ॥ ३ सखि ईदृशी एव गति ॥ ४ दे प्रसीद तावत् सुन्दरि ॥ ५ दे आप्रसीद निवर्तस्व ॥ ६ हुं गृहाण स्वयं किल ॥ ७ हुं कथय सद्भावम् ॥ ८ त्वमपि हुं अच्छिन्नश्री ॥ ९ त्वं खु श्रिया रहस्यम् ॥ १० न हु केवलं संगृहीता ॥ ११ एतां खु हसति ॥ १२ जलधरः खु धूमपटलः खु ॥ १३ तरितुं न हु केवलं इमाम् ॥ १४ एतां खु हसति ॥ १ कः खु एष सहस्रशिरा ॥

**ऊ गर्हाक्षेपविस्मयसूचने ॥ २ ॥ १९९ ॥**

ऊ इति गर्हादिषु प्रयोक्तव्यम् ॥ गर्हा, ऊ निल्लज्ज ॥ प्रक्रान्तवाक्यस्य विपर्यासाशङ्कया विनिवर्तनलक्षण आक्षेपः । ऊ कि[1] मए भणिअ 'विसये' ऊ कह मुणिआ अहय ॥ 'सूचने' ऊ केण[2] विण्णाय ॥

**थु कुत्सायाम् ॥ २ ॥ २०० ॥**

थु इति कुत्सायां प्रयोक्तव्यम् ॥ थु निलज्जो लोओ ॥

**रे अरे सम्भाषणरतिकलहे ॥ २ ॥ २०१ ॥**

अनयोरर्थयोर्यथासंख्यम् एतौ प्रयोक्तव्यौ 'रे सभाषणे' रे हिअ[3] मडहसरिआ ॥ अरे रतिकलहे, अरे मए समं मा करेसु उवहासं ॥

**हरे क्षेपे च ॥ २ ॥ २०२ ॥**

क्षेपे सम्भाषणरतिकलहयोर्हरे इति प्रयोक्तव्यम् ॥ 'क्षेपे' ह[रे] णिल्लज्ज, 'सम्भाषणे' हरे पुरिसा, 'रतिकलहे' हरे बहु वल्लह ॥

**ओ सूचनापश्चात्तापे ॥ २ ॥ २०३ ॥**

ओ इति सूचनापश्चात्तापयोः प्रयोक्तव्यम् ॥ 'सूचनायाम्' ओ[4] अविणयतत्तिल्ले 'पश्चात्तापे' ओ न मए छाया इत्तिआए ॥ विकल्पे[5] तु उतादेशेनैव ओकारेणैव सिद्धम् ॥ ओ विरएमि नहयले[6] ॥

**अव्वो सूचनादुःखसम्भाषणापराधविस्मयानन्दादरभय-खेदविषादपश्चात्तापे ॥ २ ॥ २०४ ॥**

---

१ ऊ कथं ज्ञाता अहम् ॥ २ ऊ केन न विज्ञातम् ॥ ३ रे हृदय मडह- सरित्का [illegible] ॥ [illegible] रे हृदय अ[illegible] ॥ ४ ओ अविनयतृप्तिमति ॥ ५ ओ न मया छाया एतावत्याम् ॥ ६ विरमामि नभस्तले ॥

अव्वो इति सूचनादिषु प्रयोक्तव्यम् ॥ 'सूचनायाम्' अव्वो दुक्करयारय 'दुःखे' अव्वो दलन्ति हिअय 'समापणे' अव्वो किमिणं किमिण 'अपराधविसययोः' अव्वो हरन्ति हिअय तह वि न वेसा हवन्ति युवईण, अव्वो किंपि रहस्स मुणन्ति धुत्ता जणब्भहिआ ॥ (आनन्दादरभयेषु) अव्वो सुपहायमिणं, अव्वो अज्ज म्ह सप्फल जीअं, अव्वो अइअम्मि तुमे नवर जइ सा न जूरिहिइ ॥ (खेदे) अव्वो न जामि छेत्त, (विषादे)

अव्वो नासेन्ति दिहिं पुलय वड्ढेन्ति देन्ति रणरणय ॥ पीडा

एण्हिं तस्सेअ गुणा ते चिअ अव्वो कहणु एय

(पश्चात्तापे) अव्वो तह तेण कया अहय जह कस्स साहेमि ॥

अइ संभावने ॥ २ ॥ २०५ ॥

संभावने अइ इति प्रयोक्तव्य ॥ अइ दिअर किं न पेच्छसि ॥

वणे निश्चयविकल्पानुकम्प्ये च ॥ २ ॥ २०६ ॥

निश्चयादौ संभावने च वणे इति प्रयोक्तव्यम् ॥ वणे देमि (निश्चय ददामि) (विकल्पे) होइ वणे न होइ (भवति वा न भवति) (अनुकम्प्ये) दासो वणे न मुच्चइ (दासोऽनुकम्प्यो न

---

१ अव्वो दुष्करकारक ॥ २ अव्वो किमिद किमिदम् ॥ ३ अव्वो हरन्ति हृदय, तथापि न द्वेष्या भवन्ति युवतीनाम् ॥ अव्वो किमपि रहस्य जानन्ति धूर्ता जनाभ्यधिका ॥ ४ अव्वो सुप्रभातम् इदम् ॥ ५ अव्वो अद्य मम सफल जीवितम् ॥ अव्वो अतीते त्वयि नवरं यदि सा न खिद्यति ॥ ६ अव्वो नाशयन्ति धृतिं पुलकं वर्धयन्ति ददति रणरणकम ॥ इदानीं तस्यैव गुणास्त एव अव्वो कथ [illegible] एतद् ॥ ७ अव्वो तथा तेन कृता अह यथा कस्य कथयामि ॥

त्यज्यते ) ( समारने ) नेत्थि मणे ज न देइ विहि [illegible]
संभाव्यते एतदित्यर्थः ॥

मणे विमर्शे ॥ २ ॥ २०७ ॥

मणे इति विमर्शे प्रयोक्तव्यम् ॥ मणे सूरो, किंस्वित्सूर्य[2]
अन्ये मन्ये इत्यर्थमपीच्छन्ति ॥

अम्मो आश्चर्ये ॥ २ ॥ २०८ ॥

अम्मो इत्याश्चर्ये प्रयोक्तव्यम् ॥ अम्मो कह पारिज्जइ ॥

स्वयमोऽर्थे अप्पणो नवा ॥ २ ॥ २०९ ॥

स्वयम् इत्यस्यार्थे अप्पणो वा प्रयोक्तव्यम् ॥ विसयं वियस[2]
अप्पणो कमलसरा ॥ पक्षे मैअ चेव मुणसि करणिज्जं ॥

प्रत्येकमः पाडिक्कं पाडिएक्कम् ॥ २ ॥ २१० ॥

प्रत्येकम् इत्यस्यार्थे पाडिक्क पाडिएक्क इति च प्रयोक्तव्य वा
पाडिक्क पाडिएक्क, पक्षे पत्तेअ ॥

उअ पश्ये ॥ २ ॥ २११ ॥

उअ इति, पश्य इत्यस्य अर्थे वा प्रयोक्तव्यम् ॥
उअ निच्चलनिप्फंदा भिसिणीपत्तम्मि रेहइ बलाया
निम्मलमरगयभायणपरिट्ठिआ संखसुत्तिव्व
पक्षे पुल आदय. ॥

इहरा इतरथा ॥ २ ॥ २१२ ॥

---

१ नास्ति यत् न ददाति विधिपरिणामः ॥ २ विशदं विकसन्ति स्वयं कमलसरांसि ॥ ३ मम चैव जानासि करणीयम् ॥ ४ पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ॥ निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव ॥

इहरा इति इतरथार्थे प्रयोक्तव्यम् वा ॥ ईहरा नीसामन्नेहिं ॥असा-
क्षे इअरहा ॥

एक्कसरिअं झगिति संप्रति ॥ २ ॥ २१३ ॥

एघमरिअ झगित्यर्थे, सम्प्रत्यर्थे च प्रयोक्तव्यम् ॥ एक्कसरिअं
झगिति सांप्रत वा ॥

मोरउल्ला मुधा ॥ २ ॥ २१४ ॥

मोरउल्ला इति मुधार्थे प्रयोक्तव्य, मोरउल्ला मुधा इत्यर्थः ॥

दरार्धाल्पे ॥ २ ॥ २१५ ॥

दर इत्यव्ययम् अर्धार्थे, ईषदर्थे च प्रयोक्तव्यम् ॥ दर विअ-
सेअ ॥ अर्धेनेषद्वा विकसितमित्यर्थः ॥

किणो प्रश्ने ॥ २ ॥ २१६ ॥

किणो इति प्रश्ने प्रयोक्तव्यम् ॥ किणो धुवसि ॥

इजेराः पादपूरणे ॥ २ ॥ २१७ ॥

इ जे रा इत्येते पादपूरणे प्रयोक्तव्याः ॥ न उणा इ अच्छीइं ॥
अणुकूल वोत्तुं जे ॥ गेण्हइ र कमलगोवी ॥ अहो हहो हे हो हा
नाम अहह हीसि अयि अहाह अरिरिहो इत्यादयस्तु संस्कृतस-
मत्वेन सिद्धाः ॥

प्यादयः ॥ २ ॥ २१८ ॥

प्यादयो नियतार्थवृत्तयः प्राकृते प्रयोक्तव्या ॥ पि वि अप्यर्थे॥

इति अव्ययप्रकरणम् ॥

---

१ इतरथा नि सामान्ये ॥ २ न पुन अक्षीणि ॥ ३ अनुकूल वक्तु जं ॥

## अथ लिङ्गानुशासनम्

**प्रावृट्‌शरत्तरणयः पुंसि ॥ १ ॥ ३१ ॥**

प्रावृट् शरत्तरणि इत्येते शब्दा॰ पुंसि पुंलिङ्गे प्रयोक्तव्या पाउसो, सरओ, एस तरणी ॥ तरणिशब्दस्य पुंस्त्रीलिङ्गत्वेन नि मार्थम् उपादानम् ॥

**स्नमदामशिरो-नभ॰ ॥ १ ॥ ३२ ॥**

दामन् शिरस् नमस् वर्जित सकारान्त नकारान्त च शब्द पुंसि प्रयोक्तव्यम् ॥ सान्त, जसो पओ तमो तेओ उरो, नान्त जम्मो नम्मो मम्मो ॥ अदामशिरोनभ इति किम् ॥ दा सिर, नह ॥ यच्च 'सेय वेय सुमण सम्म चम्म, इति दृश्यते बहुलाधिकारात् ॥

**वाऽक्ष्यर्थ वचनाद्याः॰ ॥ १ ॥ ३३ ॥**

अक्षिपर्याया लोचनादयश्च शब्दाः पुंसि वा प्रयोक्तव्याः अस्यर्था । अंज वि सा सवइ ते अच्छी ॥ नचावियाइ तेण अच्छीइ ॥ (अञ्जल्यादिपाठात् अक्षिशब्द॰ स्त्रीलिङ्गेऽपि) ए अच्छी ॥ चक्खू चक्खूइ, नयणा नयणाइ, लोअणा लोअणाइं (वचनादि) वयणा वयणाइं, विज्जुणा विज्जूण, कुलो कुल, छन्दो छन्द, माहप्पो माहप्प, दुक्खा दुक्खाइ, भायणा भायणा इत्यादि ॥ इतिवचनादय ॥ नेत्ता नेत्ताइ, कमला कमल इत्यादिस्तु संस्कृतवदेव सिद्धम् ॥

---

१ धैवम् यमम् सुमनम् इत्येतेषां सकारान्तानाम्, शर्मन् चर्मन् इत्यनयोर्नकारान्तानाम् पुंलिङ्गत्वे प्राप्ते इत्यादि समाप्तम् ॥ २ अदामि मा सरासि ते अंज ॥

गुणाद्याः क्लीबे वा ॥ १ ॥ ३४ ॥

गुणादयः क्लीबे वा प्रयोक्तव्याः ॥ गुणाइं गुणा, विहवेहिँ गुणाइं मग्गन्ति, देवाणि देवा, बिन्दूइं बिन्दुणो, खग्गं खग्गो, मण्डलग्गं मण्डलग्गो, कररुहं कररुहो, रुक्खाइं रुक्खा ॥ इत्यादि, इति गुणादयः ॥

वेमाञ्जल्याद्याः स्त्रियाम् ॥ १ ॥ ३५ ॥

इमन्ता अञ्जल्यादयश्च शब्दाः स्त्रियां वा प्रयोक्तव्याः ॥ एसा गरिमा, एस गरिमा, एसा महिमा एस महिमा, एसा निल्लज्जिमा, एस निल्लज्जिमा, एसा धुत्तिमा, एस धुत्तिमा, ॥ अञ्जल्यादि । एसा अञ्जली, एस अजली, पिट्ठी पिट्ठं, (पृष्ठमित्वे कृते स्त्रियामेवेत्यन्ये) अच्छी अच्छिं, पण्हा पण्हो, चोरिआ चोरिअं ॥ एवं कुच्छी वली निही विही रस्सी, गठी, इत्यञ्जल्यादयः ॥ गड्डा गड्डो, इति तु संस्कृतवदेव सिद्धम् ॥ इमेति तन्त्रेण त्वादेशस्य डिमा इत्यस्य पृथ्व्यादीम्नश्च सग्रहः. त्वादेशस्य स्त्रीत्वमेव इच्छन्ति एके ॥ इति लिङ्गानुशासनम् ॥

इति हेमचन्द्राचार्यरचिते प्राकृतव्याकरणे द्वितीयपादः समाप्तिम् अगमत् ॥

॥ अर्हम् ॥

श्रीस्तम्भनकपार्श्वनाथस्वामिभ्यो नमः ॥

## अथ स्यादिविभक्तीन् समारभन्ते तत्र अकारान्त पुलिङ्गो वृक्षशब्दः ॥

वृक्षशब्दात् सिप्रत्यये कृते छोऽक्ष्यादौ ।२।१७। इति क्षस
आदेशे जाते 'वच्छ सि' इत्यवस्थितम् ॥

अतः सेर्डोः ॥ ३ ॥ २ ॥

अकारान्तान्नाम्नः परस्य स्यादेः सेः स्थाने डो भवति ॥ वच्छो
प्राकृते द्विवचनाभावात्, वच्छ जस्, इत्यवस्थायाम् ॥

जस्शसोर्लुक् ॥ ३ ॥ ४ ॥

अकारान्तान्नाम्नः परयोः स्यादिसम्बन्धिनोर्जस्शसोर्लुक् भवति,

जस्शस्ङसित्तोदोद्वामि दीर्घः ॥ ३ ॥ १२ ॥

एषु अतो दीर्घो भवति ॥ वच्छा एए ॥

अमोऽस्य ॥ ३ ॥ ५ ॥

अतः परस्य अमोऽकारस्य लुग् भवति ॥ वच्छं पेच्छ, ॥

टाणशस्येत् ॥ ३ ॥ १४ ॥

टादेशे णे, शसि च परे अत एत्वं भवति ॥ टाणे, वच्छेण,
इति किं, अप्पणा, अप्पणिआ, अप्पणइआ, शसि वच्छे पेच्छ ॥
जस्शस्ङसीति (३॥१२) दीर्घत्वे तु वच्छा ॥

---

१ [illegible] ॥ ३ ॥ [illegible]

### टा-आमोर्णः ॥ ३ ॥ ६ ॥

अत परस्य टा इत्यस्य षष्ठीबहुवचनस्य चामो णो भवति ॥ च्छेण वच्छेण ॥

### भिसो हि हिँ हिं ॥ ३ ॥ ७ ॥

अत परस्य भिस स्थाने केवलः सानुनासिकः सानुस्वारश्च हेर्भवति ॥

### भिस्भ्यस्सुपि ॥ ३ ॥ १५ ॥

एषु अत एत्वं भवति ॥ वच्छेहि वच्छेहिँ वच्छेहिं, कया ग्रही ॥ प्राकृते चतुर्थी विभक्तिर्न भवति प्रायेण, तादर्थ्ये भवत्यपि तथापि च तत्र संस्कृतवत् वच्छाय इति रूपम् अपि ज्ञेयम् ॥

### ङसेस् त्तोदोदुहिहिन्तोलुकः ॥ ३ ॥ ८ ॥

अतः परस्य ङसेः त्तो दो दु हि हिन्तो लुक् इत्येते षड् आदेशा भवन्ति ॥ 'ह्रस्वः संयोगे' इति ह्रस्वत्व। वच्छत्तो, वच्छाओ, वच्छाउ, च्छाहि, वच्छाहिन्तो, वच्छा ॥ दो इत्यत्र दकारकरण भाषान्तर्थम् ॥ ङसिनेव सिद्धे त्तोदोदुग्रहण भ्यसि एत्वबाधनार्थम् ॥

### भ्यसस् त्तो दो दुहि हिन्तो सुन्तो ॥ ३ ॥ ९ ॥

अत. परस्य भ्यसः स्थाने त्तो दो दु हि हिन्तो सुन्तो इत्यादेशा भवन्ति ॥

### भ्यसि वा ॥ ३ ॥ १३ ॥

भ्यसादेशे परेऽतो दीर्घो वा भवति ॥ दीर्घाभावपक्षे एत्त्वम् ॥

---

१ वक्रादावन्तः ॥ १ ॥ २७ ॥ इति अनुस्वारागम ॥ २ जस्शस् ङसि, त्तोदोद्वामि दीर्घ ॥ ३ ॥ १२ ॥ इति दीर्घत्वम् ॥ ३ भिस्भ्यस्सुपि ॥ ३ ॥ १५ ॥ रानन सूत्रेण ॥

वच्छत्तो वच्छाओ, वच्छाउ, वच्छाहि, वच्छेहि, वच्छाहि
वच्छेहिन्तो वच्छासुन्तो, वच्छेसुन्तो ॥

ङसः स्स ॥ ३ ॥ १० ॥

अतः परस्य ङस. स्थाने स्सो भवति ॥ वच्छस्स, पिय
पेमस्स, उपकुम्भशैत्यम् ॥ उवकुंभस्स सीअलत्तण ॥ षष्ठीब
चने वच्छाण, वच्छाण ॥

डेम्मि ङेः ॥ ३ ॥ ११ ॥

अतः परस्य ङेर्डित् एकार' सयुक्तो म्मिश्च भवति ॥ वच्
वच्छम्मि ॥ देव देवम्मि, त तम्मि, अत्र 'द्वितीयातृतीय
सप्तमी ॥ ३ ॥ १३५ ॥' इत्यमो ङि. ॥ सुपि वच्छेसु वच्छेसु

डो दीर्घो वा ॥ ३ ॥ ३८ ॥

आमन्त्रणात् परे सौ सति, अत' सेर्डोरिति,यो नित्य डो प्राप्तो,
'अक्लीबे सौ,' इति इदुतोऽकारान्तस्य च प्राप्तो दीर्घ', स वा भव
हे वच्छ, हे वच्छो, हे देव हे देवो, हे समासमण हे समासमण
हे अज्ज हे अज्जो, हे वच्छा ॥ एव देव मनुष्य, रामकृष्णादिनादय'
सर्वनामसंज्ञकशब्दानां तु विशेष' यथाहि अकारान्तसर्व
ब्दस्य पुंलिङ्गे रूपाणि, तत्र प्रथमायां सि विभक्तौ सव्वो, ॥

अत सर्वादेर्डेर्जस ॥ ३ ॥ ५८ ॥

सर्वादेरदन्तात् परस्य जस' डित् ए इत्यादेशो भवति, स

---

१ टासामोर्ण ॥ ३ ॥ ६ ॥ इत्यनुस्वार [illegible] ॥ [illegible] ॥
११॥ इति [illegible] ॥ २ [illegible] ॥ ३ ॥ १५ ॥ [illegible] ॥

अन्ने जे ते के एके कयरे इयरे एए, अतः इति किम्, सवाओ रिद्धीओ, जस इति किं, सवस्स, ॥ १ ॥ सब सबे सवा ॥ २ ॥ पवेण मवेण सवेहि सवेहिँ सवेहिं ॥ ३ ॥ सवत्तो सवाओ सवाउ सवाहि सवाहिन्तो सवा, सवत्तो सवाओ सवाउ सवाहि सवेहि सवाहिन्तो सवेहिन्तो सवासुन्तो सवेसुन्तो ॥ ५ ॥ सवस्स

आमो डेसिं ॥ ३ ॥ ६१ ॥

सर्वादेरकारान्तात्परस्य आमो डेसिम् इत्यादेशो वा भवति, सवेसिं अन्नेसिं अवरेसिं इमेसिं एएसिं जेसिं तेसिं केसिं पक्षे सवाण सवाण ॥ ६ ॥ अन्नाण अवराण इमाण एआण जाण ताण काण ॥ बहुलाधिकारात् स्त्रियामपि, (सर्वासाम्) सवेसिं, एवम् अन्नेसिं तेसिं ॥

ङे: स्सि-म्मि-त्थाः ॥ ३ ॥ ५९ ॥

सर्वादेरकारान्तात्परस्य ङे[1] स्थाने स्सिं म्मि त्थ इत्येते आदेशा भवन्ति ॥ सवस्सिं सवम्मि सवत्थ, अन्नस्सिं अन्नम्मि अन्नत्थ, एवं सर्वत्र, अत इत्येव अमुम्मि ॥

नवाऽनिदमेतदो हिं ॥ ३ ॥ ६० ॥

इदमेतद् वर्जितात् सर्वादेरदन्तात्परस्य ङेर्हिमादेशो वा भवति ॥ सवहिं, अन्नहि कहिं जहिं तहिं, बहुलाधिकारात् किंयत्तद्भ्यः स्त्रियामपि, काहि जाहिं ताहिं ॥ बहुलकादेव 'किंयत्तदोस्यमामि

---

१ अन्त्यव्यञ्जनस्य ॥ १ ॥ ११ ॥ इत्यनेनान्त्यव्यञ्जनस्य लोपे कृते त्यदादीनामपि प्रायेण अदन्तत्वेनोदाहरति, जे ते इति ॥ २ स्त्रियामुदोतौ वा ॥ ३ ॥ २७ ॥ इति ङस् स्थाने ओदादश ॥

॥ ३ ॥ २२ ॥ इति डीर्नास्ति, पक्षे, सव्वस्सि सव्वम्मि सव्वत्थ इत्यादि, स्त्रियां तु पक्षे, काए कीए जाए जीए ताए तीए इदमेतद्वर्जेन किम् इमस्सि एआस्सि ॥ सुपि तु सव्वेसु सव्वेसु ॥ ७ हे सव्व हे सव्वो हे सव्वे ॥ एव विश्वादयोऽपि अदन्ता ॥ त्यदादीनाम् तु विशेष, तत्र तावत् तदेतन्उदयो पुल्लिङ्गे रूपा कथ्यते ॥

वैतत्तदः ॥ ३ ॥ ३ ॥

एतत्तदोऽकारात् परस्य सादे डो वा भवति ॥

तदश्च त. सोऽक्लीबे ॥ ३ ॥ ८६ ॥

तद एतदश्च तकारस्य सौ परे अक्लीबे सो भवति ॥ स एष सो पुरिसो, सा महिला, एस णरो, एसो पिओ, एसा मुद्ध सावित्त्येव, ते एए धन्ना, ताओ एआओ महिलाओ, अक्लीबे इ किम् । त एअ वण ॥

वैसेणमिणमो सिना ॥ ३ ॥ ८५ ॥

एतद सिना सह एस इणम् इणमो इत्यादेशा वा भवन्ति सव्वस्स वि एस गई ॥ सव्वाण वि पत्थिवाण एस मही ॥ ए सहाओ चिअ ससहरस्स, एस सिर, इण इणमो ॥ पक्षे ए एसा एसो ॥

---

१ [illegible]

तदो ण॰ स्यादौ क्वचित् ॥ ३ ॥ ७० ॥

तदः स्थाने स्यादौ परे ण आदेशो भवति ॥ क्वचिद् लक्ष्यानुसारेण ॥ ण पेच्छ 'त पश्येत्यर्थ', सोअइ अ ण रहुवई, 'तमित्यर्थ.', स्त्रियामपि, हत्थुन्नामिअमुही ण तिअडा, 'ता त्रिजटेत्यर्थ', णेण भणिअ 'तेन भणितमित्यर्थः', तो णेण करयलट्ठिआ 'तेन इत्यर्थ', भणिअ च णाए 'तयेत्यर्थ', णेहिं कयं 'तै कृतमित्यर्थ', णाहि कय 'ताभिः कृतमित्यर्थः', जसि तु, तं एए, १ अमि, त ण एअ, शसि ता ते एता एए २ ॥

इदमेतत्कि यत्तद्भ्यष्टो डिणा ॥ ३ ॥ ६९ ॥

एभ्य सर्वादिभ्योऽकारान्तेभ्य' परस्याष्टाया' स्थाने डित् इणा इत्यादेशो वा भवति, इमिणा इमेण, एदिणा, एदेण, किणा केण, जिणा जेण, तिणा तेण, पक्षे तेण तेण, एएण एएण, तेहिं तेहिं, एएहि एएहि ३ ॥

ङसेर्म्हा ॥ ३ ॥ ६६ ॥

किंयत्तद्भ्य परस्य ङसे॰ स्थाने म्हा इत्यादेशो वा भवति ॥ कम्हा जम्हा तम्हा, पक्षे काओ जाओ ताओ ॥

वैतदो ङसेस्त्तो त्ताहे ॥ ३ ॥ ८२ ॥

एतद' परस्य ङसे॰ स्थाने त्तो त्ताहे इत्येतौ आदेशौ वा भवत ॥

त्थे च तस्य लुक् ॥ ३ ॥ ८३ ॥

एतदस्त्थे परे चकारात् त्तो त्ताहे इत्येतयोश्च परयो॰ तस्य लुक्

---

१ गोचति च त रघुपति ॥ २ तस्मात् तेन करतलस्थिता ॥ ३ तोदाऽनादौ शौरसेन्यामयुक्तस्य ॥ ४ ॥ २६० ॥ इति तकारस्य दकारान्त ॥

भवति, एत्तो एत्ताहे पक्षे, एआओ एआउ एआहि एआहि एआ ॥ ताओ ताउ ताहि ताहिन्तो ॥

तदो डोः ॥ ३ ॥ ६७ ॥

तद् परस्य ङसेर्डो इत्यादेशो वा भवति, तो, पक्षे तम्हा ॥

किंयत्तद्भ्यो ङसः ॥ ३ ॥ ६३ ॥

एभ्यः परस्य ङसः स्थाने डास इत्यादेशो वा भवति, ङसः ॥ ३ ॥ १० ॥ इत्यस्यापवाद, पक्षे सोऽपि भवति, कस्स, जास जस्स तास तस्स, एअस्स/ बहुलाधिकारात् किं द्भ्याम् आकारान्ताभ्यामपि डासादेशो वा भवति, (कस्या धन कास घण (तस्या धन) तास घण पक्षे, काए ताए ॥

किंतद्भ्यां डासः ॥ ३ ॥ ६२ ॥

किंतद्भ्यां परस्य आमः स्थाने डास इत्यादेशो वा काम तास पक्षे केसि तेसि ॥

वेदं तदेतदो ङसाम्भ्यां सेसिमौ ॥ ३ ॥ ८१ ॥

इदं तद् एतद् इत्येतेषां स्थाने ङस् आम् इत्येताभ्यां सह य सस्य से सिम् इत्यादेशौ वा भवत । 'इदम्, से सील, से गु (अस्य शील गुणा चेत्यर्थः ॥) सिं उच्छाहो, (एषामुत्सा इत्यर्थः ॥ तद्, से सील, (तस्य तस्या चेत्यर्थः ) सि गुण (तेषां तासां चेत्यर्थ ) (एतद्) से अहिअं, (एतस्याधिक अहिअं चेत्यर्थः ) सिं गुणा, सि सीलं, (एतेषां गुणा शी चेत्यर्थं ) पक्षे इमस्स इमेसि इमाण, तस्स तेसिं ताण, एआ

एएसि एआण ॥ इदंतदोराभापि से आदेश केचिदिच्छन्ति ६ ॥ सप्तम्येकवचने, स्सिं म्मि त्थ इत्यादेशे कृते ॥

एरदीतौ म्मौ वा ॥ ३ ॥ ८४ ॥

एतद् एकारस्य ङ्यादेशे म्मौ परे अदीतौ वा भवतः ॥ अअम्मि ईअम्मि, पक्षे एअम्मि, एअस्सिं एत्थ तस्सिं तत्थ तम्मि ॥

ङे र्डाहे-डाला-इआ काले ॥ ३ ॥ ६५ ॥

किंयत्तद्भ्यः कालेऽभिधेये ङेः स्थाने, आहे आला इति डितौ इआ इति च आदेशा वा भवन्ति ॥ हिंस्सिम्मित्थानामपवादः, पक्षे तेपि भवन्ति ॥ काहे काला कइआ, जाहे जाला जइआ, ताहे ताला तइआ, ॥ ताला जाअंति, गुणा[1] जाला ते सहि अएहिं घेप्पंति ॥ रविकिरणाणुग्गहिं आइं हुंति कमलाइं कमलाइं ॥ सुपि तु एएसु एएसु तेसु तेसु ॥ ७ ॥ शेष सर्ववत् त्यदादीना प्रायेण संबोधन न संभवति ॥ हे स इति भाष्यप्रयोगात्कचिद्भवत्यपि ॥

---

## अथ इदं शब्दस्य पुलिङ्गे रूपाणि ।

पुंस्त्रियोर्न वाऽयमिमिआ सौ ॥ ३ ॥ ७३ ॥

इदम् शब्दस्य सौ परे अयम् इति पुलिङ्गे, इमिआ इति स्त्रीलिङ्गे आदेशा वा भवतः ॥ अहवाऽय कयकज्जो, इमिआ वाणिअधूआ ॥ पक्षे,

---

१ त्थे च तस्य लुक् ॥ ३ ॥ ८३ ॥ इति तकारस्य लुक् ॥ २ तदा जायन्ते गुणा, यदा ते सहृदयैर्गृह्यन्ति रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

इदम इम ॥ ३ ॥ ७२ ॥

इदम[1] स्यादौ परे इम आदेशो भवति ॥ इमो, इमे, १ स्त्रि
मपि इमा ॥

अमेणम् ॥ ३ ॥ ७८ ॥

इदमोऽमा सहितस्य स्थाने इणम् इत्यादेशो वा भवति,
पेन्छ पक्षे ॥

णोऽमशस्टाभिसि ॥ ३ ॥ ७७ ॥

इदमः स्थाने अम्शस्टाभिस्सु परेषु ण आदेशो वा भव
ण पेच्छ, णे पेच्छ, णेण णेहिं कय, पक्षे इम, इमे इमा, ॥ ३
इमेण इमेण, इमिणा इमेहि इमेहिँ इमेहि ॥३॥ ङसि, इमत्तो इम
इमाउ इमाहि इमाहिन्तो इमा ॥ भ्यसि, इमत्तो इमाओ इ
इमाहि इमेहि इमाहिन्तो इमेहिन्तो इमासुन्तो इमेसुन्तो ॥ ५ ।

स्सिस्सयो-रत् ॥ ३ ॥ ७४ ॥

इदमः स्सिंस्स इत्येतयोः परयो रद् वा भवति ॥ अस्स अस्सिं
पक्षे इमादेशोपि इमस्स इमस्सिं, से ॥ बहुलाधिकारादन्यत्र
भवति ॥ एहिं, एसु, आहि, एभिः, एषु आभिरित्यर्थः । आमि
इमाण, सिं ॥ ६ ॥

डेर्मेन ह' ॥ ३ ॥ ७५ ॥

कृतेमादेशाद् इदमः परस्य ङेः स्थाने मेन सह ह आदेशो
भवति, इह, पक्षे ॥

---

१ इदमेतत्कियत्तद्भ्यष्टो डिणा ॥ ३ ॥ ६९ ॥ इति टास्थाने डिणादेश
२ वेदं तदेतदो ङसाम्भ्यां सेसिमौ ॥ ३ ॥ ८१ ॥ इति ङसा सहितस्य इदम
आदेश ॥ ३ अत्र ङिस्सुपो परयोरिदमोऽस्त्यम् ॥

न त्थः ॥ ३ ॥ ७६ ॥

इदमः परस्स टे' स्सिम्मित्था इति प्राप्तस्त्थो न भवति, इह इमस्सिं इमम्मि ॥ सुपि इमेसु इमेसु ७ ॥ शेष सर्ववद् ॥

अथ किं शब्दस्य रूपाणि,

किम् सि इति स्थितम् ॥

किमः कस्त्रतसोश्च ॥ ३ ॥ ७१ ॥

किमः को भवति स्यादौ त्रतसोश्च परयोः, को के ॥ १ ॥ क के का ॥ २ ॥ किणा केण केहि केहिँ केहि ॥ ३ ॥

किमो डिणो डीसौ ॥ ३ ॥ ६८ ॥

किम' परस्य ङसेर्डिणो डीस इत्यादेशौ वा भवत' ॥ किणो कीस कम्हा, कत्तो कदो काउ काहि कोहिन्तो का, कत्तो काओ काउ काहि केहि काहिन्तो केहिन्तो कासुन्तो केसुन्तो ॥ ५ ॥ कास कस्स, कासे केसिं काण ॥ ६ ॥

केहिं कस्सिं कत्थ, कम्मि, केसु केसु ॥ ७ ॥ इत्यादि ॥ शेष सर्ववत् ॥

---

१ यद्यपि गणपाठानुसारेण किं शब्दस्य रूपाणि युष्मच्छब्दात्पश्चादेव स्थानीयानि भवन्ति, तथापि तदेतच्छब्दयोर्मध्ये बहुसूत्राणां सद्भावात् किं शब्दस्यापि तदन्तर्गतत्वात् गणपाठक्रमो न विवक्षित ॥ २ इदमेतत्कियत्तद्भ्यष्टो डिणा ॥ ३ ॥ ६९ ॥ इति टास्थाने डिणादेश ॥ ३ कियत्तद्भ्यो ङस ॥ ३ ॥ ६३ ॥ इति ङसस्थाने डासादेश ॥ ४ किंतद्भ्यां डाम ॥ ३ ॥ ६२ ॥ इत्यामो डासादेश ॥ ५ आमो डेसिं ॥ ३ ॥ ६१ ॥ इत्यामो डेसिमादेश ॥ ६ न थानिदमेतदो हिं ॥ ३ ॥ ६० ॥ इति डेर्हिमादेश ॥

## अथ अदश्शब्दस्य पुलिङ्गे रूपाणि।

### वाऽदसो दस्य हो नोदाम् ॥ ३ ॥ ८७ ॥

अदसो दकारस्य सौ परे ह आदेशो वा भवति, तस्मिंश्च अतः सेर्डोरित्योत्त्वं शेष संस्कृतवदित्यतिदेशाद्, आद् (हे०२ इत्याप्, क्लीवे स्वरान्म्से॰ (३।२५) इति मश्च न भवति, अ पुरिसो, अह महिला, अह वण, अह मोहो परगुणलहुआई, अ णे हिअएण हसइ मारुअतणओ (असावसान् हसति इत्यर्थः), अह कमलमुही, पक्षे ॥

### मुः स्यादौ ॥ ३ ॥ ८८ ॥

अदसो दस्य स्यादौ परे मुरादेशो भवति, अमू पुरिसो, अ वण अमू माला ॥ जसि, अमुणो पुरिसा, अमूइ वणाइ, अमू घनाणि, अमूउ अमूओ मालाओ ॥ १ ॥ अमु पुरिस अमु पुरिसे ॥ २ ॥ अमुणा अमूहि ॥ ३ ॥ अमुत्तो, अमूओ, अमू अमूहिन्तो ॥ भ्यसि, अमूहिन्तो अमूसुन्तो ॥ ५ ॥ ङसि, अमुण अमुस्स ॥ आमि, अमूण ॥ ६ ॥ ङौ ॥

### म्मावयेऔ वा ॥ ३ ॥ ८९ ॥

अदसोऽन्त्यव्यञ्जनस्य लुकि दकारान्तस्य स्थाने य्यादेशे म्मौ

---

१ जश्शसोर्णो वा ॥ ३ ॥ २२ ॥ इति जसो णो ॥ ३ जश्शस ङ समाद् दीर्घः ॥ ३ ॥ २६ ॥ इति जस इमादेश ॥ ३ ङिमामुदोता वा ॥ ३ ॥ इति जस उदोतौ आदेशौ ॥ ४ टङिङसा पुंसीत्ते वा ॥ ३ ॥ २२ ॥ इति ट राद्या ॥

अय इअ इत्यादेशौ वा भवतः ॥ अयम्मि, इअम्मि, पक्षे अमुम्मि ॥ सुपि, अमूसु ॥ शेष वक्ष्यमाणमानुशब्दवत् ॥

---

## अथ युष्मदस्मच्छब्दयो रूपाणि।

**युष्मदस्तं तुं तुव तुह तुमं सिना ॥ ३ ॥ ९० ॥**

युष्मद' सिना सह त तु तुव तुह तुम इत्येते पञ्चादेशा भवन्ति ॥ त तु तुव तुह तुमं दिट्ठो ॥

**भे तुब्भे उज्झे तुम्ह तुय्हे उय्हे जसा ॥ ३ ॥ ९१ ॥**

युष्मदो जसा सह एते षडादेशा भवन्ति ॥ भे तुब्भे उज्झे तुम्ह तुय्हे उय्हे चिट्ठह ॥ ब्भो म्हज्झौ वा ॥ ३ ॥ १०४ ॥ इति वचनात् तुम्हे तुज्झे, एव चाष्टरूपाणि ॥ १ ॥

**तं तुं तुव तुम तुह तुमे तुए अमा ॥ ३ ॥ ९२ ॥**

युष्मदोऽमा सह एते सप्तादेशा भवन्ति, त तु तुव तुम तुह तुमे तुए वदामि ॥

**वो तुब्भे उज्झे तुय्हे उय्हे भे शसा ॥ ३ ॥ ९३ ॥**

युष्मदः शसा सह एते षडादेशा भवन्ति, वो तुब्भे उज्झे तुय्हे उय्हे भे, पेच्छामि, ॥ २ ॥ ब्भो म्हज्झौ वेति वचनात् तुम्हे तुज्झे ॥

**भे दि दे ते तइ तए तुम तुमइ तुमए तुमे तुमाइ टा॥३॥९४**

युष्मदष्टा इत्यनेन सह एते एकादशादेशा भवन्ति ॥ भे दि दे ते तइ तए तुम तुमइ तुमए तुमे तुमाइ, जपिअ ॥

भे तुब्भेहिं उज्झेहिं उम्हेहिं तुम्हेहि उय्हेहिं भिसा ३॥

युष्मदो भिसा सह एते षडादेशा भवन्ति ॥ भे तुब्भेहिं उ
उम्हेहिं तुम्हेहिं उय्हेहिं भुच, ब्भो म्हज्झौ वेति वचनात् ड
तुम्हेहिं, एवम् च अष्टरूपाणि ॥ ३ ॥

तइ तुव तुम तुह तुब्भा ङसौ ॥ ३ ॥ ९६ ॥

युष्मदो ङसौ पञ्चम्येकवचने परत एते पञ्चादेशा भवन्ति
ङसेस्तु 'चोदो दुहि हिन्तो लुको यथा प्राप्तमेव ॥ तइत्तो तुव
तुमत्तो तुहत्तो तुब्भत्तो, ब्भो म्हज्झौ वेति वचनात्, तुम्ह
तुज्झत्तो, एव दो दुहि हिन्तो लुक्स्वपि उदाहार्यम् ॥ तत्तो इति
त्वत्त इत्यस्य वलोपे सति ॥

तुय्ह तुब्भ तहिन्तो ङसिना ॥ ३ ॥ ९७ ॥

युष्मदो ङसिना सहितस्य एते त्रय आदेशा भवन्ति, तु
तुब्भ तहिन्तो आगओ ॥ ब्भो म्हज्झौ वेति वचनात्, तुम्ह तु
एवञ्च, पञ्चरूपाणि ॥

तुब्भ तुय्हो-य्हो-म्हा भ्यसि ॥ ३ ॥ ९८ ॥

युष्मदो भ्यसि परत एते चत्वार आदेशा भवन्ति, भ्यसः
यथाप्राप्तमेव, तुब्भत्तो तुय्हत्तो उय्हत्तो उम्हत्तो, ब्भो म्हज्
वेति वचनात् तुम्हत्तो तुज्झत्तो ॥ एवं, दोदुहि हिन्तो सुन्तेष्व
उदाहार्यम् ॥ ५ ॥

तइ तु ते तुम्ह तुह तुहं तुम तुव तुमे तुमो तुमा-
इ दि दे इ ए तुब्भोब्भो-य्हा ङसा ॥ ३ ॥ ९९ ॥

युष्मदो ङसा षष्ठ्येकवचनेन सहितस्य एते अष्टादशादेश

भवन्ति ॥ तइ तु तं तुम्ह तुह तुहं तुवं तुम तुमे तुमो तुमाइ दि दे इ ए तुब्भ उब्भ उय्ह भण ॥ ब्भो म्हज्झौ वेति वचनात्, तुम्ह तुज्झ उम्ह उज्झ, एवं च द्वाविंशतिरूपाणि ॥

तुवो भे तुय्ह तुब्भ उब्भ तुब्भाण तुवाण तुमाण
तुहाण तुम्हाण आमा ॥ ३ ॥ १०० ॥

युष्मद आमा सहितस्य एते दशादेशा भवन्ति, तुनो भे तुय्ह तुब्भ उब्भ तुब्भाण तुवाण तुमाण तुहाण तुम्हाण ॥ क्त्वास्यादेर्णस्वोर्वेत्यनुस्वारे, तुब्भाण तुवाण तुमाण तुहाण तुम्हाण, ब्भो म्हज्झौ वेति वचनात्, तुम्ह, तुज्झ, उम्ह उज्झ, तुम्हाण तुम्हाण, तुज्झाण तुज्झाण, एवं च त्रयोविंशतिरूपाणि ॥ ६ ॥

तुमे तुमए तुमाइ तइ तए ङिना ॥ ३ ॥ १०१ ॥

युष्मदो ङिना सप्तम्येकवचनेन सहितस्य एते पञ्चादेशा भवन्ति ॥ तुमे तुमए तुमाइ तइ तए ठिअ ॥

तु तुव तुम तुह तुब्भा ङौ ॥ ३ ॥ १०२ ॥

युष्मदो ङौ परत एते पञ्चादेशा भवन्ति ॥ ङेस्तु यथा प्राप्तमेव, तुम्मि तुवम्मि तुमम्मि तुहम्मि तुब्भम्मि ॥ ब्भो म्हज्झौ वेति वचनात् तुम्हम्मि तुज्झम्मि, इत्यादि ॥

सुपि ॥ ३ ॥ १०३ ॥

युष्मदः सुपि परतः तु तुव तुम तुह तुब्भा भवन्ति ॥ तुसु तुवेसु तुमेसु तुहेसु, तुब्भेसु, ब्भोम्हज्झौ वेति वचनात्, तुम्हेसु तुज्झेसु ॥ केचित्तु सुपि एत्त्वविकल्पमिच्छन्ति, तन्मते, तुवसु

तुमसु तुहसु तुब्भसु तुम्हसु तुज्झसु ॥ तुब्भस्स आत्त्वमपि इच्छन्ति इत्यन्ये, तुब्भासु तुम्हासु तुज्झासु ॥

ब्भो म्हज्झौ वा ॥ ३ ॥ १०४ ॥

युष्मदादेशेषु यो द्विरुक्तो भस्तस्य म्हज्झ इत्येतौ आदेशौ वा भवतः ॥ पक्षे स एवास्ते, तथैव च उदाहृतम् ॥

असदो म्मि अम्मि अम्हि हं अहं अहयं सिना ॥३॥१०५॥

असदः सिना सह एते षडादेशा भवन्ति ॥ अज्ज म्मि हासिआ मामि तेण, 'उन्नम न अम्मि कुविआ, 'अम्हि करेमि, जिण हं विद्धा, किं पम्हट्ठम्मि अहं, 'अहयं कयप्पणामो ॥

अम्ह अम्हे अम्हो मो वयं भे जसा ॥ ३ ॥ १०६ ॥

असदो जसा सहैते षडादेशा भवन्ति ॥ अम्ह अम्हे अम्हो मो वयं भे, भणामो ॥ १ ॥

णे णं मि अम्मि अम्ह मम्ह मं ममं मिमं अहं
अमा ॥ ३ ॥ १०७ ॥

असदोऽमा सह एते दशादेशा भवन्ति ॥ णे णं मि अम्मि अम्ह मम्ह मं ममं मिमं अहं पेच्छ ॥

अम्हे अम्हो अम्ह णे शसा ॥ ३ ॥ १०८ ॥

असदः शसा सह एते चत्वार आदेशा भवन्ति ॥ अम्हे अम्हो अम्ह णे पेच्छ ॥ २ ॥

मि मे ममं ममए ममाइ मइ मए मयाइ णे टा ॥ ३॥१०९॥

असदष्टा सहितस्य एते नवादेशा भवन्ति ॥ मि मे ममं ममए ममाइ मइ मए मयाइ णे कयं ॥

---

१ मामि ( इति सम्बोधने ) अद्य अहं तेन हासिता ॥

अम्हेहि अम्हाहि अम्ह अम्हे णे भिसा ॥ ३ ॥ ११० ॥

असदो भिसा सह एते पञ्चादेशा भवन्ति ॥ अम्हेहिं अम्हाहिं अम्ह अम्हे णे, कय ॥ २ ॥

मइ मम मह मज्झा ङसौ ॥ ३ ॥ १११ ॥

असदो ङसौ पञ्चम्येकवचने परत एते चत्वार आदेशा भवन्ति ॥ टसेस्तु यथाप्राप्तमेव, मइत्तो, ममत्तो, महत्तो, मज्झत्तो, आगओ, मत्तो इति तु मत्त इत्यस्य, एव दो दुहि हिन्तो लुक्ष्वपि उदाहार्यम् ॥

ममाम्हौ भ्यसि ॥ ३ ॥ ११२ ॥

असदो भ्यसि परतो मम अम्ह इत्यादेशौ भवत ॥ भ्यसस्तु यथा प्राप्त, ममत्तो अम्हत्तो ममाहिन्तो अम्हाहिन्तो, ममासुन्तो अम्हासुन्तो, ममेसुन्तो अम्हेसुन्तो ॥ ५ ॥

मे मइ मम मह महं मज्झ मज्झं अम्ह अम्हं ङसा ३॥११३

असदो ङसा षष्ठ्येकवचनेन सहितस्य एते नवादेशा भवन्ति ॥ मे मइ मम मह मह मज्झ मज्झ अम्ह अम्ह घण ॥

णे णो मज्झ अम्ह अम्हं अम्हे अम्हो अम्हाण ममाण महाण मज्झाण आमा ॥ ३ ॥ ११४ ॥

असद आमा सहितस्य एते एकादशादेशा भवन्ति ॥ णे णो मज्झ अम्ह अम्ह अम्हे अम्हो अम्हाण ममाण महाण मज्झाण घण ॥ क्त्वास्यादेर्णस्वोर्वेत्यनुस्वारे, अम्हाण ममाण महाण मज्झाण ॥ एवं च पञ्चदश रूपाणि ॥ ६ ॥

मि मइ ममाइ मए मे ङिना ॥ ३ ॥ ११५ ॥

असदो टिना सहितस्य एते पञ्चादेशा भवन्ति ॥ मि मइ ममाइ मए मे, ठिअ ॥

अम्ह मम मह मज्झा ङौ ॥ ३ ॥ ११६ ॥

असदो ङौ परत एते चत्वार आदेशा भवन्ति ॥ ङेस्तु यथा प्राप्तम् ॥ अम्हम्मि ममम्मि महम्मि मज्झम्मि ठिअ ॥

सुपि ॥ ३ ॥ ११७ ॥

असदः सुपि परे अम्हादयश्चत्वार आदेशा भवन्ति ॥ अम्हेसु ममेसु महेसु मज्झेसु ॥ एत्त्वविकल्पमते तु, अम्हसु ममसु महसु मज्झसु ॥ अम्हस्स आत्त्वमपीच्छन्ति अन्ये अम्हासु ॥

इति युष्मदस्मत्प्रकरणम् ॥

# अथ इकारोकारान्तौ गिरिभानुशब्दौ

## गिरि सि भाणु सि इति स्थिते

### अक्लीबे सौ ॥ ३ ॥ १९ ॥

इदुतोरक्लीबे नपुंसकादन्यत्र सौ दीर्घो भवति ॥ गिरी भाणू बुद्धी धेणू ॥ अक्लीब इति किं दहिं महुं ॥ साविति किं गिरिं भाणु बुद्धिं धेणु ॥ केचित्तु दीर्घत्वं विकल्प्य तदभावपक्षे सेर्मादेश-मपीच्छन्ति, अग्गिं निहिं वाउं विहुं ॥

### पुंसि जसो डउ डओ वा ॥ ३ ॥ २० ॥

इदुत इति पञ्चम्यन्तं सम्बध्यते, इदुत[1] परस्य जस पुंसि अउ अओ इत्यादेशौ डितौ वा भवतः ॥ गिरउ गिरओ भाणउ भाणओ चिट्ठन्ति ॥ पुंसीति किम्, बुद्धीओ धेणूओ दहीइं, महूइं जस इति किम्, गिरी गिरिणो भाणू भाणुणो पेच्छइ, इदुत इत्येव वच्छा ॥ पक्षे

### जश्शसोर्णो वा ॥ ३ ॥ २२ ॥

इदुतः परयोः जश्शसो[2] पुंसि णो इत्यादेशो वा भवति ॥

### न दीर्घो णो ॥ ३ ॥ १२५ ॥

इदुदन्तयोरर्थात् जश्शसङस्यादेशे णो इत्यस्मिन् परतो दीर्घो न

---

१ अत्र 'क्लीबे स्वरान्मसे ॥ ३ ॥ २५ ॥ इति सेर्मकारादेश' ॥ २ अत्र ष श ष-स्थाने न भवत ॥ ३ जश्शसङसित्तोदोद्वामि दीर्घ ॥ ३ ॥ १२ ॥ इति प्राप्तस्य अनेन निषेध ॥

भवति ॥ गिरिणो भाणुणो रेहन्ति ॥ पक्षे शेषे अदन्तवद् भावा: गिरी भाणू ॥ पुसीत्येव दहीइ महुइ, जश्शसोरिति किम् गिरिं भाणु ॥ इदुत इत्येव वच्छा वच्छे ॥, जश्शसोरिति द्वित्वम् इदुत इत्यनेन यथा सख्याभावार्थम् ॥ एवमुत्तरसूत्रेऽपि ॥

वोतो डवो ॥ ३ ॥ २१ ॥

उदन्तात् परस्य जस[1] पुंसि डित् अवो इत्यादेशो वा भवति भाणवो ॥ पक्षे भाणओ भाणउ भाणू भाणुणो ॥ उत इति किं वच्छा, पुसीत्येव धेणू महूइ, जस इत्येव भाणू भाणुणो पेच्छ ॥१॥ अमि तु गिरिं भाणु ॥ शसि, गिरिणो भाणुणो, ॥

लुसे शसि ॥ ३ ॥ १८ ॥

इदुतो[2] शसि लुप्ते दीर्घो भवति ॥ गिरी भाणू, बुद्धी धेणू पेच्छ, लुप्त इति किम्, गिरिणो भाणुणो पेच्छ ॥ इदुत इत्येव वच्छे पेच्छ ॥ जसशस् ॥ ३ ॥ १२ ॥ इत्यादिना शसि दीर्घस्य लक्ष्यानुरोधार्थोऽयं योग ॥ लुप्त इति तु णवि प्रतिप्रसवार्थशङ्का निवृत्त्यर्थम् ॥ २ ॥

टो णा ॥ ३ ॥ २४ ॥

पुंक्लीबे वर्त्तमानादिदुत. परस्य टा इत्यस्य णा भवति ॥ गिरिणा गामणिणा, भाणुणा खलपुणा तरुणा, दहिणा महुणा ॥ टा इति किम् ॥ गिरी भाणू दहिं महुं, पुंक्लीबे इत्येव, बुद्धीए धेणूए कयं ॥ इदुत इत्येव कमलेण ॥

---

1 शेषेऽदन्तवद् ॥ ३ ॥ १२४ ॥ इति सूत्रेण ॥ 2 अन्यथा इकारान्तात् जश्शो णो, उकारान्तात् शसो णो इत्यर्थोऽपि संभाव्येत ॥

इदुतोर्दीर्घः ॥ ३-॥ १९ ॥

इकारस्य उकारस्य च भिस्भ्यस्सुप्सु परेषु दीर्घो भवति ॥ गिरीहि गिरीहिँ गिरीहिं भाणूहि भाणूहिँ भाणूहिं, बुद्धीहिं दहीहिं तरूहिं धेणूहिं कय ॥ २ ॥ क्वचिन्न भवति, दिअभूमिसु दाणज लोल्लिआइ, इदुत इति किम् वच्छेहिं, वच्छेसुन्तो, वच्छेसु, भिस्भ्यस्सुपीत्येव, गिरिं तरु पेच्छ ॥ ३ ॥

ङसिङसोः पुक्लीबे वा ॥ ३ ॥ २३ ॥

पुंसि क्लीबे च वर्त्तमानादिदुतः परयोर्ङसिङसोर्णो वा भवति, गिरिणो भाणुणो, दहिणो महुणो आगओ वियारो वा ॥ पक्षे ङसौ गिरीओ गिरीउ गिरीहिन्तो भाणूओ भाणूउ भाणूहिन्तो ॥ हिलुकौ निषेत्स्येते ॥ भ्यसि गिरीओ गिरिहिन्तो गिरीसुन्तो, भाणूओ भाणूहिन्तो भाणूसुन्तो ॥ ५ ॥ ङसि गिरिणो गिरिस्स भाणुणो भाणुस्स ॥ आमि तु, गिरीण गिरीणं भाणूण भाणूणं॥६॥ ङौ गिरिम्मि भाणुम्मि, सुपि गिरीसु गिरीसुं भाणूसु भाणूसुं ॥ ७ ॥ हे गिरी हे गिरि, हे गिरिणो गिरओ गिरउ ॥ हे भाणू हे भाणु, हे भाणवो भाणुणो भाणओ भाणउ ॥ शेष वच्छशब्द- वत्, एवं कविमुनिसूरिप्रभृतय इकारान्तास्तथा वायुतरुगुर्वा- दय उकारान्ताश्च अन्येपि ज्ञेया॰ ॥ प्राकृते इकारान्तो द्विशब्दो बहुवचनान्तः ॥

---

१ द्विजभूमिषु दानजलार्द्रितानि ॥ २ न दीर्घो णो ॥ ३ ॥ १२५ ॥ इति दीर्घाभा व ॥ ३ इसेटच्ङ् ॥ ३ ॥ १२६ ॥ भ्यसश्चहि ॥ ३ ॥ १२७ ॥ इति सूत्राभ्याम् ॥ ४ दोर्दीर्घोवा ॥ ३ ॥ ३८ ॥ इति विकल्पेन दीर्घ ॥ ५ वोतो डवो ॥ ३ ॥ २१ ॥ इति जसो डवो आदेश ॥

दुवे दोण्णि वेण्णि च जश्शसा ॥ ३ ॥ १२० ॥

जश्शस्भ्यां सहितस्य द्वेः स्थाने दुवे दोण्णि वेण्णि इत्येते दे
चे आदेशा भवन्ति ॥ दुवे दोण्णि वेण्णि दो वे, ठिआ, पेच्छ व
'ह्रस्वः संयोगे ॥ १ ॥ ८४ ॥ इति ह्रस्वत्वे दुण्णि विण्णि ॥

द्वेर्दोवे ॥ ३ ॥ ११९ ॥

द्विशब्दस्य तृतीयादौ दो वे इत्यादेशौ भवतः ॥ दोहि व
कय, ३ दोहिन्तो वेहिन्तो ५ आगओ ॥

सङ्ख्याया आमो ण्ह ण्हं ॥ ३ ॥ १२३ ॥

सङ्ख्याशब्दात्परस्य आमो ण्ह ण्हं इत्यादेशौ भवतः ॥ दो
दोण्ह वेण्ह वेण्ह धण ६ ॥ पंचण्ह छण्ह सत्तण्ह अट्टण्ह नवण्ह दस
पचण्हं छण्हं सत्तण्हं अट्ठण्हं नवण्हं दसण्हं, 'पण्णरसण्ह दिवसा
अट्ठारसण्ह समणसाहस्सीण, (कतीनाम्) कइण्ह, बहुलाधिकारा
विंशत्यादेर्न भवति । सुपि तु ॥ दोसु दोसुं, वेसु वेसु इति ॥ ७

त्रेस्तिण्णि ॥ ३ ॥ १२१ ॥

जश्शस्भ्या सहितस्य त्रे स्थाने तिण्णि इत्यादेशो भवति
तिण्णि ठिआ पेच्छ वा ॥

त्रेस्ती तृतीयादौ ॥ ३ ॥ ११८ ॥

त्रे स्थाने ती इत्यादेशो भवति, तृतीयादौ ॥ तीहि कय
तीहिन्तो, आगओ, तिण्ह तिण्ह धण, तीसु ठिअ ॥

चतुरश्चत्तारो चउरो चत्तारि ॥ ३ ॥ १२२ ॥

चतु शब्दस्य जश्शस्भ्या सह चत्तारो चउरो चत्तारि इत्ये

आदेशा भवन्ति ॥ चत्तारो चउरो चत्तारि, चिट्ठन्ति पेच्छ वा ॥

चतुरो वा ॥ ३ ॥ १७ ॥[1]

चतुरुदन्तस्य भिम्भ्यस्सुप्सु परेषु दीर्घो वा भवति ॥ चऊहि चऊहिँ, चऊहि चउहि चउहिँ चउहि, २ चऊओ चउओ चऊ हिन्तो चउहिन्तो चऊसुन्तो चउसुन्तो ॥ ५ ॥ चउण्ह चउण्ह ॥६॥ चऊसु चउसु ॥ ७ ॥ इति इदुदन्ताः शब्दा[2] ॥

ईकारान्त[2] पुलिङ्गो ग्रामणी शब्दः, तथा ऊकारान्त पुलिङ्ग खलपूशब्दः ॥

क्विपः ॥ ३ ॥ ४३ ॥

क्विबन्तस्य ईदूदन्तस्य ह्रस्वो भवति, गामणिणा खलपुणा गाम णिणो खलपुणो ॥

ईदूतोर्ह्रस्वः ॥ ३ ॥ ४२ ॥

आमन्त्रणे सौ परे ईदूदन्तयोर्ह्रस्वो भवति ॥ हे नइ, हे गामणि हे समणि, हे खलपु, इत्यादि ॥ शेष गिरिभानुशब्दवत्, एव सुश्रीसुधीवर्पाभ्रप्रसरा अपि ज्ञेयाः ॥

---

१ चतु शब्दस्यापि अन्त्यव्यञ्जनस्य इति रलोपे उकारान्तत्वात् समध्य निर्देश ॥
२ प्राकृतप्रकाशे इकारोकारान्तशब्दाना साधकानि पृथक् सूत्राणि न दृश्यन्ते, ततो ज्ञायते तेषामपि इकारोकारान्तवद् रूपाणि भवन्ति, अत्र यद् विशेष वदाद क्विप इति ॥

## ऋकारान्त पुलिङ्ग कर्तृशब्दः ॥

### आ सौ न वा ॥ ३ ॥ ४८ ॥

ऋदन्तस्य सौ परे आकारो वा भवति ॥ कत्ता, पिआ, जामाया, माया ॥ पक्षे

### आरः स्यादौ ॥ ३ ॥ ४५ ॥

स्यादौ परे ऋत आर इत्यादेशो भवति ॥ कत्तारो, कत्त ो ॥ १ ॥ कत्तार कत्तारे कत्तारा ॥ २ ॥ कत्तारेण कत्तारेहि ॥ ३ एव टस्यादिष्वपि सर्वत्र वृक्षशब्दवद् उदाहार्यम् ॥ संबोधने तु

### ऋतोऽद्वा ॥ ३ ॥ ३९ ॥

ऋकारान्तस्य आमन्त्रणे सौ परे अकारो वा भवति ॥ हे क (हे कर्त्तः) हे पिअ (हे तात) हे दाय, पक्षे हे कत्तार, ॥

### नाम्न्यरं वा ॥ ३ ॥ ४० ॥

ऋदन्तस्य आमन्त्रणे सौ परे नाम्नि संज्ञाया विषये अरम् इत्यादेशो वा भवति ॥ (हे पित ) हे पिअरं, पक्षे हे पिअ, नाम्नि किम्, (हे कर्त्त.) हे कत्तार ॥

### ऋताम् उद् अस्यमौसु वा ॥ ३ ॥ ४४ ॥

सि अम् औ वर्जिते अर्थात् स्यादौ परे ऋदन्तानाम् उदन्तादेश वा भवति ॥ जसि, कत्तू, कत्तुणो, कत्तउ, कत्तओ, पक्षे, कत्ता ॥ १ ॥ शसि, कत्तू, कत्तुणो, पक्षे कत्तारे ॥ २ ॥ टा कत्तुण पक्षे कत्तारेण, भिसि कत्तूहिं ॥ पक्षे कत्तारेहि ॥ ३ ॥ ङस कत्तुणो, कत्तूओ, कत्तूउ, कत्तूहिन्तो, पक्षे, कत्ताराओ ॥ ५

ङसि कत्तुणो कत्तुस्स, पक्षे कत्तारस्स ॥६॥ सुपि कत्तूसु, पक्षे कत्तारेसु ॥ शेष भानुशब्दवत् ॥ एव भर्तृनेतृदातृप्रभृतयोऽपि ज्ञेयाः ॥ ऋकारान्त पुलिङ्गः पितृशब्दः ॥

नाऽयरः ॥ ३ ॥ ४७ ॥

ऋदन्तस्य नाम्नि सज्ञाया स्यादौ परे अर इत्यन्तादेशो भवति ॥ पिअरो पिअरा ॥ १ ॥ पिअर पिअरे ॥ २ ॥ पिअरेण पिअरेहि ॥ ३ ॥ जामायरो जामायरा ॥ १ ॥ जामायरे ॥ २ ॥ जामायरेण ॥ ३ ॥ इत्यादि, शेष वच्छशब्दवत् ॥ एव भ्रातृप्रभृतयोऽपि सज्ञावाचका उदाहार्याः ॥ इति ऋदन्तशब्दाः ॥ गोशब्दस्य च पुलिङ्गे गावे इति गोण इति वा आदेशो भवति ॥ ततश्च स्यादौ अदन्तवत् रूपाणि भवन्ति ॥

---

## नकारान्त पुलिङ्गो राजन् इति शब्द ॥

राज्ञ ॥ ३ ॥ ४९ ॥

राज्ञो न लोपेऽन्त्यस्य आत्त्व वा भवति सौ परे ॥ राया, हे राया, पक्षे आणादेश च वक्ष्यते रायाणो, हे राया, हे रायमिति तु शौरसेन्याम्, एव हे अप्प हे अप्प ॥

जश्शस्ङसिङसा णो ॥ ३ ॥ ५० ॥

राजन्शब्दात् परेषाम् एषा णो इत्यादेशो वा भवति, ॥

---

१ गोणादय ॥ ८ ॥ १७४ ॥ इत्यनेन सूत्रेण ॥ २ पुस्यन आणो राजवच्च ॥ ३ ॥ ५६ ॥ इति अभिहितस्य आणादेश, कथयिष्यति ॥

### इर्जस्य णोणाङौ ॥ ३ ॥ ५२ ॥

राजन्शब्दसम्बन्धिनो जकारस्य स्थाने णोणाङिषु परेषु इक वा भवति ॥ रायाणो राइणो वा चिट्ठति, पक्षे राया रायाणा ॥

### इणम् अमामा ॥ ३ ॥ ५३ ॥

राजन्शब्दसम्बन्धिनो जकारस्य अमाम्भ्यां सहितस्य स्थ इणम् इत्यादेशो वा भवति ॥ राइण पेच्छ, पक्षे राय रायाणं शसि, रायाणो राइणो वा पेच्छ, पक्षे राया राए, रायाण रायाणे, ॥ २ ॥

### टो णा ॥ ३ ॥ ५१ ॥

राजन्शब्दात्परस्य टा इत्यस्य णा इत्यादेशो वा भवति ॥

### आजस्य टाङसिङस्सु सणाणोष्वण् ॥ ३ ॥ ५५ ॥

राजन्शब्दसम्बन्धिन आज इत्यवयवस्य टाङसिङस्सु णा इत्यादेशापन्नेषु अण् वा भवति ॥ रण्णा राइणा, पक्षे राय राएणं रायाणेण ॥

### ईद् भिस्भ्यसाम्सुपि ॥ ३ ॥ ५४ ॥

राजन्शब्दसम्बन्धिनो जकारस्य भिसादिषु परतो वा ईकार

---

१ अन्त्यव्यञ्जनस्येति नलोप ॥ जस्शसोर्लुग् इति जसो लुक् ॥ अतः सेर्डोः इति सो ... द्वामि दीर्घ इति दीर्घत्वम् ॥ २ पुंस्यन आणो राजवच्च ॥ ३ ॥ ५६ ॥ इति अभिप्रा आणादेश शेषं पूर्ववद् एवम् अन्यत्रापि ज्ञेयम् ॥ ३ जस्शस्ङसिङसां णो ॥ ३ ॥ ५० ॥ इति जसो णो आदेश ॥ राइणो इत्यत्र तु 'इर्जस्यणोणाङौ' ॥ ३ ॥ ५२ ॥ इति विशेष ॥ ४ पुंस्यनेत्यादिना ॥ ३ ॥ ५६ ॥ अभिन्यस्य आणादेश ॥ ५ ... नलोप , टआमोर्ण इति टास्थाने ... टाणशस्येत्, इति अकारस्य एत्वम् ।

भवति ॥ राईहिं, पक्षे राएहिं, रायाणेहिं ॥ एव हि हिं परयोरपि ॥ ३ ॥ ङसौ राइणो रण्णो, राअचो रायाओ रायाउ, रायाणचो रायाणाओ रायाणाउ रायाणाहिन्तो ॥ भ्यसि तु राईओ राईहिन्तो राईसुन्तो, रायत्तो रायाओ रायाहिन्तो रायासुन्तो, आणादेशपक्षे रायाणाओ रायाणाउ रायाणाहिन्तो, रायाणेहिन्तो रायाणेसुन्तो ॥ ५ ॥ ङसि राइणो रण्णो, रायस्स रायाणस्स ॥ आमि, राइण, राईण, रायाण, रायाणाण ॥ ६ ॥ राँइम्मि, राए, रायाणम्मि रायाणे ॥ राईसु, राएसु, रायाणेसु ॥ इत्यादि ॥ राजन्शब्दसाऽन्येपाच नकारान्तानां सर्वासु विभक्तिपु सामान्यतो रूपाणि तु एवम् ॥

पुस्यन आणो राजवच्च ॥ ३ ॥ ५६ ॥

पुलिङ्गे वर्तमानस्य अन्नन्तस्य स्थाने आण इत्यादेशो वा भवति ॥ पक्षे यथादर्शन राजवत् च कार्यं भवति ॥ आणादेशे च अतः सेर्डोः ( ३।२ ) ॥ इत्यादयः प्रवर्त्तन्ते ॥ पक्षे तु राज्ञ• जस्शस्ङसिङसा णो ॥ ३ ॥ ५० ॥ टो णा ॥ ३ ॥ ५१ ॥ ङणममामा ॥ ३ ॥ ५३ ॥ इति प्रवर्त्तन्ते ॥ अप्पाणो अप्पाणा ॥ १ ॥ अप्पाण अप्पाणा अप्पाणे ॥ २ ॥

---

१ अन्त्यव्यञ्जनस्येति नलोप ॥ भिस्भ्यस्सुपि ॥ ३ ॥ १५ ॥ इति जकारोत्तर अकारस्य एत्वम् ॥ २ जसृशसृङसिङसां णो ॥ ३ ॥ ५० ॥ इति ङसेर्णो ॥ इर्जस्य णोणाङौ ॥ ३ ॥ ५२ ॥ इति जस्य इकार ॥ ३ आजस्य टाङसिङस्सु सणाणोष्वण् ॥ ३ ॥ ५५ ॥ इत्यानस्य अणादेश ॥ ४ ईद् भिस्भ्यसाम्सुपि ॥ ३ ॥ ५४ ॥ इति अकारस्य ई इत्यादेश ॥ ५ इणममामा ॥ ३ ॥ ५३ ॥ इति आम सह जकारस्य इणमित्यादेश ॥ ६ ईद् भिस्भ्यसां सुपि ॥ ३ ॥ ५४ ॥ इति जस्य ईत्वम् ॥ ७ इर्जस णोणाङौ ॥ ३ ॥ ५२ ॥ इति जस्य इत्वम् ॥

आत्मनष्टो णिआ णइआ ॥ ३ ॥ ५७ ॥

आत्मन' परस्याष्टायाः स्थाने णिआ णइआ इत्यादेशौ भवतः ॥ 'अप्पणिआ पाउसे उवगयम्मि, अप्पणिआ य विआ सणिआ, अप्पणइआ ॥ पक्षे अप्पाणेण, अप्पाणेहिं ॥ ३ ॥ अप्प णाओ, अप्पाणासुन्तो ॥ ५ ॥ अप्पाणस्स अप्पाणाण ॥ ६ ॥ अप्पाणम्मि अप्पाणेसु ॥ अप्पाणकय ॥ पक्षे राजवत्, अप्प अप्पो, हे अप्पा हे अप्प, अप्पाणो पेच्छ, अप्पणा, अप्पेहि अप्पाणो अप्पाओ अप्पाउ अप्पाहि अप्पाहिन्तो अप्पा, अप्पा सुन्तो ॥ ५ ॥ अप्पणो धण ॥ अप्पाण ॥ ६ ॥ अप्पे अप्पेसु ॥ रायाणो, रायाणा, ॥ १ ॥ रायाण रायाणे ॥ २ ॥ रायाणेहिं ॥ ३ ॥ रायाणाहिन्तो ॥ ५ ॥ रायाणस्स रायाणा ॥ ६ ॥ रायाणम्मि रायाणेसु ॥ पक्षे राया, इत्यादि ॥ एव जुवाणो जुवाणजणो जुआ ॥ बम्हाणो बम्हा ॥ अद्धाणो अद्धा ॥ (उक्षन्) उच्छाणो, उच्छा ॥ (ग्रीवान्) गावाणो गावा ॥ पूसाणो पूसा ॥ तक्खाणो तक्खा ॥ मुद्धाणो, मुद्धा ॥ (श्वन्) साणो सा ॥ (सुकर्मेण पश्य) सुकम्माणो पेच्छ ॥ निएइ कह सो सुकम्माणं (पश्यति कथ स सुकर्मणः) इत्यर्थ ॥ पुसीति किं 'शर्म, सम्म ॥

शेषेऽदन्तवत् ॥ ३ ॥ १२४ ॥

उपयुक्तादन्य' शेषस्तत्र स्यादिविधिरदन्तवद् अतिदिश्यते, येषु आकाराद्यन्तेषु पूर्व कार्याणि नोक्तानि तेषु जश्शसोर्लुग् इत्यादीनि, अदन्ताधिकारविहितानि कार्याणि भवन्तीत्यर्थः ॥ तत्र जश्शसोर्लुक्, इत्येतत्कार्यातिदेशः, गिरी गाऊ तरू सही यहू माला

रेहन्ति पेच्छ वा ॥ अमोऽस्य ॥ ३ ॥ ५ ॥ इत्येतत्कार्यातिदेशः गिरिं वाउ तरु गुरु सहिं वहु गामणिं खलपु पेच्छ ॥ टा आमो र्णः ॥ ३ ॥ ६ ॥ इत्येतत्कार्यातिदेशः ॥ मालाण हाहाण कय गिरीण वाऊण गुरूण सहीण वहूण घण ॥ टायास्तु 'टो णा ॥ ३ ॥ २४ ॥ टाङसङेरदादिदे द्वातु ङसेः ॥ ३ ॥ २९ ॥ इति विधिरुक्तः ॥ भिसो हि हिँ हिं ॥ ३ ॥ ७ ॥ इत्येतत्कार्यातिदेशः ॥ गिरीहि गुरूहि सहीहि वहूहि मालाहि कय ॥ एव सानुनासिकानुस्वारयोरपि ॥ ङसेस् त्तोदो दुहि हिन्तो लुकः ॥ ३ ॥ ८ ॥ इत्येतत्कार्यातिदेश· ॥ गिरीओ वाऊओ मालाओ मालाउ मालाहिन्तो ॥ बुद्धीओ बुद्धीउ बुद्धीहिन्तो ॥ धेणूओ धेणूउ धेणूहिन्तो आगओ ॥ हिलुकौ तु प्रतिपेत्स्येते, 'भ्यसस्तोदो दुहि हिन्तो सुन्तो, इत्येतत्कार्यातिदेशः, मालाहिन्तो मालासुन्तो हिस्तु निपेत्स्यते एव गिरीहिन्तो इत्यादि, ङसः स्स इत्येतत्कार्यातिदेश' गिरिस्स गुरुस्स दहिस्स महुस्स ॥ स्त्रिया तु टाङसङेरित्याद्युक्तम्, ङेम्मिङे-रित्येतत्कार्यातिदेश', गिरिम्मि गुरुम्मि दहिम्मि महुम्मि ङेस्तु निपेत्स्यते ॥ स्त्रिया तु टाङसङेरित्यादि उक्त, जश्शस्ङसि त्तोदो द्वामिदीर्घः ॥ इत्येतत्कार्यातिदेशः, गिरी गुरू चिट्ठन्ति, गिरीओ गुरूओ आगओ, गिरीण गुरूण घण ॥ भ्यसि वा ॥ इत्येतत्कार्यातिदेशो न प्रवर्त्तते इदुतोर्दीर्घः ॥ इति नित्य विधानात् ॥ टाणशसेत् ॥ भिस्भ्यस्सुपि ॥ इत्येतत्कार्यातिदेशस्तु निपेत्स्यते ॥

इति स्वरान्तपुंलिङ्गः ॥

## आकारान्त स्त्रीलिङ्गो मालाशब्दः ॥

प्रथमैकवचने माला, जसि तु ॥

स्त्रियामुदोतौ वा ॥ ३ ॥ २७ ॥

स्त्रियां वर्तमानान्नाम्नः परयोर्जश्शसोः स्थाने प्रत्येकम् उ ओत् इत्येतौ सप्राग्दीर्घौ वा भवतः ॥ वचनभेदो यथासंख्या[र्थ] वृत्त्यर्थ ॥ मालाउ मालाओ बुद्धीउ बुद्धीओ, सहीउ सहीओ धेणूउ धेणूओ, वहूउ वहूओ, पक्षे माला बुद्धी सही धेणू वहू स्त्रियामिति किम् वच्छा, जश्शस इत्येव मालाए कय ॥ १ ॥

ह्रस्वोऽमि ॥ ३ ॥ ३६ ॥

स्त्रीलिङ्गस्य नाम्नोऽमि परे ह्रस्वो भवति, मालं नइं वहुं हसमा[णिं] हसमाण पेच्छ, अमीति किम्, माला मही वहू ॥ शसि तु माला मालाओ माला ॥ शेषेऽदन्तवद् ॥ ३ ॥ १२४ ॥ इति प्राप्तमे[त्वं] निषेधयति ॥

एत् ॥ ३ ॥ १२९ ॥

आकारान्तादीनाम् अर्थात्, टाशस्भिस्भ्यस्सुप्सु परतोऽदन्त वद् एत्त्व न भवति ॥ हाहाण कय, मालाओ पेच्छ, एवं अग्गिणो वाउणो इत्यादि ॥ २ ॥ माला टा इतिस्थिते, ॥

टाङस्ङे-रदादिदेद् वा तु ङसेः ॥ ३ ॥ २९ ॥

स्त्रिया वर्तमानान्नाम्न परेषां टाङस्ङीनां स्थाने प्रत्येकम् अद्

---

१ अत सेर्डोः ॥ ३ ॥ २ ॥ इत्यत्र तपरकरणात् दीर्घान्तात् ओदोँ न भवति तत्र ग्रस्वप्रनत्सेति सपारव्याप ॥ २ अन्त्यगोऽदन्त ॥ ३ ॥ ४ ॥ इति मताऽदृत ॥

आत् इत् एत् इत्येते चत्वार आदेशाः सप्राग्दीर्घा भवन्ति, ङसे[1] पुनरेते सप्राग्दीर्घा वा भवन्ति ॥ मालाअ मालाइ मालाए कय मुह ठिअ वा, कप्रत्यये तु मालिआअ मालिआइ मालिआए ॥ कमलिआअ कमलिआइ कमलिआए ॥ बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए कय, विहओ ठिअ वा ॥ सहीअ सहीआ सहीइ सहीए कय वयण ठिअ वा, घेणूअ घेणूआ घेणूइ घेणूए कयं दुद्ध ठिअ वा, वहूअ वहूआ वहूइ वहूए कय भवण ठिअ वा ॥ ङसेस्तु वा मालाअ मालाइ मालाए, बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए, सहीअ सहीआ सहीइ सहीए घेणूअ घेणूआ घेणूइ घेणूए, वहूअ वहूआ वहूइ वहूए, आगओ ॥ पक्षे मालाओ मालाउ मालाहिन्तो, रईओ रईउ रईहिन्तो, घेणूओ घेणूउ घेणूहिन्तो इत्यादि ॥ शेषेऽदन्तवत् ॥ ३ ॥ १२४ ॥ इत्यतिदेशात् जश्शस् ङसित्तोदो द्वामि दीर्घः ॥ ३ ॥ १२ ॥ इति दीर्घत्वम्, पक्षेऽपि भवति, स्त्रियामित्येव वच्छेण वच्छस्स वच्छम्मि वच्छाओ, टादीनामिति किम्, माला बुद्धी सही घेणू वहू ॥

## नात आत् ॥ ३ ॥ ३० ॥

स्त्रियां वर्तमानान्नाम्न[2] परेषां टाङस्ङिङसीनाम् आदादेशो न भवति ॥ मालाअ मालाइ मालाए कय ॥ भिसि मालाहि मालाहिँ मालाहिं ॥ ३ ॥ मालाअ, मालाइ, मालाए, पक्षे ॥

---

1 मालाशब्दात् स्वार्थे क ततः आप्, पूर्वस्य ह्रस्व, मालका इति जातम्, ततो ककारोत्तराकारस्य इत्वम् मालिका ॥ 2 एत् ॥ 3 ॥ १२९ ॥ इति निषेधात् भिस्भ्यस्सुपि ॥ ३ ॥ १५ ॥ इति एत्वं न भवति ॥ 3 टाङसङे रदादिदेद्वातु ङसे ॥ ३ ॥ २९ ॥ इति ङसेर्विकल्पेन अदेदिदादेशा ॥

मईए ॥ मईसु मईसुं ॥ ७ ॥ सम्बोधने, हे मई हे मइ ॥ हे
हे मईउ हे मई ॥ एव रुचिबुद्धिप्रभृतयोऽपि ज्ञेयाः ॥ एवं स्त्रीलिङ्ग
ओकारान्ता धेन्वादयोपि ज्ञेया॰ ॥

## ईकारान्त॰ स्त्रीलिङ्गो नदीशब्द॰ ॥

### ईत॰ सेश्चाऽऽवा ॥ ३ ॥ २८ ॥

स्त्रिया वर्तमानादीकारान्तात् सेर्जश्शसोश्च स्थाने आकारो व
भवति ॥ नईआ नई ॥ जसि नईआ, नई, एसा हसन्तीआ
गोरीआ चिट्ठन्ति इत्यादि पक्षे नईउ नईओ नई ॥ १ ॥ नइ, शसि
नईआ नई, पेच्छ, पक्षे नईउ नईओ नई ॥ २ ॥ नईअ नईआ
नईइ नईए ॥ नईहि नईहिँ नईहिं ॥ ३ ॥ नईअ नईआ नई
नईए, नइत्तो नईओ नईउ नईहिन्तो ॥ भ्यसि नइत्तो नईओ
नईउ नईहिन्तो नईसुन्तो ॥ ५ ॥ नईअ नईआ नईइ नईए ।
नईण नईणं ॥ ६ ॥ नईअ नईआ नईइ नईए ॥ नईसु नईसुं ॥ ७ ॥

### ईदूतोर्ह्रस्वः ॥ ३ ॥ ४२ ॥

आमन्त्रणे सौपरे ईदूदन्तयोर्ह्रस्वो भवति ॥ हे नइ ॥ हे गामणि
हे समणि हे बहु हे खलपु ॥ हे नईआ हे नई, हे नईओ हे नईउ ।
एवं गोरीदेवीभवतीपचन्तीप्रभृतयोऽपि ईकारान्ता उदाहार्या ॥
एवमूकारान्ता वध्वादयोऽपि ज्ञातव्या॰ ॥

---

१ टोसिपो॰ च ॥ ३ ॥ १८ ॥ इति सिद्धमेन साधनम् ॥

## स्त्रीलिङ्गे यच्छब्दस्य रूपाणि ॥

### किंयत्तदोऽस्यमामि ॥ ३ ॥ ३३ ॥

सि अम् आम् वर्जिते स्यादौ परे एभ्यः स्त्रियां ङीर्वा भवति ॥ इति ङी पक्षे ॥ जा, जीओ जीउ जीआ जी ॥ १ ॥ ज ॥ जीओ जीउ जीआ जी ॥ २ ॥ जीअ जीआ जीइ जीए ॥ जीहिं जीहिँ जीहि ॥ ३ ॥ जीअ जीआ जीइ जीए, जित्तो जीओ जीउ जीहिन्तो ॥ जित्तो जीओ जीउ जीहिन्तो जीसुन्तो ॥५॥ ङसि तु॥

### ईद्भ्य' स्सासे ॥ ३ ॥ ६४ ॥

किमादिभ्य ईदन्तेभ्य परस्य ङसः स्थाने स्सा से इत्यादेशौ वा भवत. ॥ टाङस्ङेरदादिदेद्वातु ङसे. ॥ ३ ॥ २९ ॥ इत्यस्याप-वाद., पक्षे अदादयोऽपि जीस्सा जीसे, पक्षे जीअ जीआ जीइ जीए ॥ जाण जाण ॥ ६ ॥ जीअ जीआ जीइ जीए ॥ जीसु जीसु ॥ ७ ॥ ङीरभावपक्षे तु जा जाओ जाउ जा ॥ १ ॥ ज ॥ जाओ जाउ जा ॥ २ ॥ जाअ जाइ जाए जाहि जाहिँ जाहिं ॥ ३ ॥ जाअ जाइ जाए जम्हा, पक्षे जत्तो जाओ जाउ जाहिन्तो ॥ जत्तो जाओ जाउ जाहिन्तो जासुन्तो ॥ ५ ॥ जाअ जाइ जाए जाण जाण ॥ ६ ॥ जाअ जाइ जाए ॥ जासु जासु ॥ ७ ॥ तच्छ-ब्दस्य तु णादेशो विशेष ॥ तथाहि सा ता णा, तीओ तीउ तीआ ती ॥ १ ॥ त ण, तीओ तीउ तीआ ती ॥ २ ॥ शेष सर्वं यच्छ-

---

१ तदश्चतः सोऽक्लीबे ॥ ३ ॥ ८६ ॥ इति तकारस्य सकार ॥ २ तदो ण स्यादौ क्वचित् ॥ ३ ॥ ७० ॥ इति तकारस्य णकारादेश ॥ ३ इत शेषा वा ॥ ३ ॥ २८ ॥ इति दाम आकारादेश ॥

व्दवत् ज्ञेयम् ॥ किंशब्दस्य रूपाणि तु एवम्, का, कीओ
कीआ की ॥ १ ॥ क, कीओ कीउ कीआ की ॥ २ ॥
कीआ कीइ कीए ॥ कीहि कीहिँ कीहिं ॥ ३ ॥ कीअ
कीइ कीए ॥ पक्षे किचो कीओ कीउ कीहिन्तो कम्हा ॥ की
कीओ कीउ कीहिन्तो कीसुन्तो ॥ ५ ॥ कीअ कीआ कीइ की
किस्सा कीसे कास ॥ काण काणं कास केसिं ॥ ६ ॥ की
कीआ कीइ कीए ॥ कीसु कीसुं ॥ ७ ॥ आकारान्तपक्षे तु का
काओ काउ का ॥ १ ॥ इत्यादि शेषं यत्तद् शब्दवत् ॥ एवम् इद
मेतच्छब्दयोरपि ज्ञेयानि ॥

---

## ऋकारान्तः स्त्रीलिङ्गो दुहितृशब्दः ॥

### स्वस्रादेर्डा ॥ ३ ॥ ३५ ॥

स्वस्रादेः स्त्रियां वर्त्तमानात् डा प्रत्ययो भवति, दुहिआ, सस
नणन्दा, जसि दुहिआउ, दुहिआओ, दुहिआ ॥ १ ॥ दुहिअं
दुहिआउ दुहिआओ दुहिआ ॥ २ ॥ दुहिआअ दुहिआइ दुहि
आए दुहिआहिं दुहिआहिँ दुहिआहि ॥ ३ ॥ इत्यादि शेषं माला
शब्दवत् ॥

---

१ ईदुद्भ्यः स्यादे ॥ ३ ॥ ५७ ॥ इति ... ॥ २ [किम]-
द्भ्यो डासः ॥ ३ ॥ ६२ ॥ ... ॥

## ऋकारान्त• स्त्रीलिङ्गो मातृशब्दः ॥

आ अरा मातुः ॥ ३ ॥ ४६ ॥

मातृसम्बन्धिन ऋकारस्य स्यादौ परे आ अरा इत्यादेशौ
त' ॥ माआ माअरा ॥ माआउ माआओ, माअराउ माअ-
ओ, पक्षे माऊओ माऊउ माऊ ॥ १ ॥ माअ माअर ॥ माआओ
आउ माआ, माअराओ माअराउ माअरा, माऊओ माऊउ
ऊ ॥ २ ॥ माआअ माआइ माआए, माअराअ माअराइ माअ-
ए, पक्षे माऊअ माऊआ माऊइ माऊए ॥ इत्यादि शेष माला-
ब्दवत्, उदादेशपक्षे तु धेनुशब्दवत् ॥

इति स्त्रीलिङ्गम् ॥

---

## अथ नपुंसकलिङ्गम्

अकारान्तो नपुंसकलिङ्गो वनशब्द , वण सि इत्यवस्थितम् ॥

क्लीबे स्वरान्म्से• ॥ ३ ॥ २५ ॥

क्लीबे वर्तमानात् स्वरान्तात् नाम्न परस्य से• स्थाने म् भवति,
॥ पेम्म, दहिं महु, दहि महु इति तु सिद्धावस्थापेक्षया, केचिद्
नुनासिकमपीच्छन्ति, दहिँ महुँ, क्लीबे इति किम् बालो बाला,
रादिति इदुतो' निवृत्त्यर्थम् ॥

---

१ आ अरा मातु' ॥ ३ ॥ ४६ ॥ आ अरा आदेशे कृते, स्त्रियामुदोतौ वा ॥ ३ ॥
॥ इति जस स्थाने उदोदादेशौ ॥ एव शसि अपि ॥ २ ऋतामुदस्यमौसु वा
३ ॥ ४४ ॥

' इति ऋकारस्य उत्वम् शेष पूर्ववत् ॥

जश्शस इँइंणयः सप्राग् दीर्घाः ॥ ३ ॥ २६ ॥

क्लीबे वर्तमानाचाम्नः परयो जश्शसो स्थाने सानुनासिकस्व
स्वारौ इकारौ णिश्चादेशा भवन्ति, स प्राग् दीर्घाः एषु सत्सु
स्वरस्य दीर्घत्वं विधीयते इत्यर्थः ॥ वणाइँ वणाइ वणाणि ॥ १
जाइँ वयणाइँ अम्हे, उम्मीलन्ति पङ्कयाइ, पेच्छ वा, चिट्ट
दहीइ जेम वा, हुन्ति महूइं मुच वा, फुल्लन्ति पङ्कयाणि गेण्ह
हुन्ति दहीणि जेम वा, एव महूणि, क्लीबे इत्येव वच्छा व
जश्शस इति किं सुहं ॥ अमि तु वणं, शस्यपि वणाइँ व
वणाणि, शेष वच्छशब्दवत् ॥ एवमेव इकारोकारान्तयो
शब्दयो रूपाणि ज्ञेयाणि ॥ समानसूत्रत्वात् पृथक् नोपद
र्शितानि ॥

नामन्त्र्यात्सौ मः ॥ ३ ॥ ३७ ॥

आमन्त्र्यार्थात् परे सौ सति "क्लीबे स्वरान्म् से" ॥ ३ ॥ २
इति यो म् उक्तः स न भवति, हे वण हे दहि हे महु, हे व
हे वणाइ, हे वणाणि ॥ एवम् इदुदन्तयोरपि ॥

क्लीबे स्यमेदमिणमो च ॥ ३ ॥ ७९ ॥

नपुंसकलिङ्गे वर्तमानस्य इदम सम्भ्यां सहितस्य इदम् इण
इणम् च नित्यम् आदेशा भवन्ति ॥ इद इणमो इण धण चि
पेच्छ वा, इमाइँ इमाइ इमाणि ॥ १ ॥ पुनरपि, इद इणमो इ
इमाइँ इमाइ इमाणि ॥ २ ॥ शेषं पुलिङ्गवत् ॥

किमः किम् ॥ ३ ॥ ८० ॥

किमः क्लीबे वर्तमानस्य सम्भ्यां सहितस्य किम् भवति, ।

कुल तुह, किं किं ते पडिहाइ, काइँ काइ काणि, ॥ १ ॥ द्वितीयायामपि किं काइँ काइ काणि ॥ २ ॥ शेष पुलिङ्गवत् इति नपुसकलिङ्गम् ॥

वीप्सात्स्यादेर्वीप्स्ये स्वरे मो वा ॥ ३ ॥ १ ॥

वीप्सार्थात्पदात्परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा भवति, (एकैकम्) एक्कमेक्क एक्कमेक्केण, (अङ्गे अङ्गे) अंगमगम्मि, पक्षे एकेक ॥ इति स्यादिविभक्तिप्रकरणाम् ॥

---

## अथ कारकप्रकरणम् ॥

द्विवचनस्य बहुवचनम् ॥ ३ १३० ॥

सर्वासा विभक्तीनां त्यादीना स्यादीना च द्विवचनस्य स्थाने बहुवचन भवति ॥ दोण्णि कुणति, दुवे कुणन्ति, दोहिं दोहिन्तो दोसुन्तो दोसु, हत्था, पाया थणया नयणा ॥

चतुर्थ्याः षष्ठी ॥ ३ ॥ १३१ ॥

चतुर्थ्याः स्थाने षष्ठी भवति, मुणिस्स मुणीण देइ, नमो देवस्स देवाण ॥

तादर्थ्यङेर्वा ॥ ३ ॥ १३२ ॥

तादर्थ्यविहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने षष्ठी वा भवति ॥ देवस्स देवाय, देवार्थमित्यर्थः ॥ ङेरिति किं देवाण ॥

वधाड्डाइश्च वा ॥ ३ ॥ १३३ ॥

वधशब्दात् परस्य ङेर्डित् आइ षष्ठी च वा भवति, वहाइ वहस्स वहाय, वधार्थमित्यर्थः ॥

क्वचिद् द्वितीयादेः ॥ ३ ॥ १३४ ॥

द्वितीयादीना विभक्तीना क्वचिद् षष्ठी भवति, सीमाव चन्दे, तिस्सा मुहस्स भरिमो, अत्र द्वितीयायाः षष्ठी, ध लुद्धो (धनेन लुब्ध इत्यर्थः) चिरस्स मुक्का चिरेण मुक्तेत तेसिं एअमणाइण्ण (तैरेतदनाचीर्णम्) अत्र तृतीयायाः चोरस्स बीहइ (चोराद् बिभेतीत्यर्थ) इअराइ जाण लहुअवत पायन्तिमिल्ल-सहिआण (पादान्तेन सहितेभ्य इतराणीति) पञ्चम्याः ॥ पिट्ठीए केस भारो, अत्र सप्तम्या. ॥

द्वितीयातृतीययोः सप्तमी ॥ ३ ॥ १३५ ॥

द्वितीयातृतीययोः स्थाने क्वचित् सप्तमी भवति, गामे वमा नयरे न जामि, अत्र द्वितीयायाः, मइ वेविरीए मलिआइं तेसु अलंकिआ पुहवी, अत्र तृतीयायाः ॥

पञ्चम्यास्तृतीया च ॥ ३ ॥ १३६ ॥

पञ्चम्या. स्थाने क्वचित् तृतीयासप्तम्यौ भवत ॥ चो बीहइ, चोराद् बिभेतीत्यर्थः (अन्तेउरे रमिउ आगओ राय अन्त. पुराद् रन्त्वाऽऽगत इत्यर्थ ॥

सप्तम्या द्वितीया ॥ ३ ॥ १३७ ॥

सप्तम्या स्थाने क्वचिद् द्वितीया भवति, विज्जुज्जोयं भरइ रा आर्षे तृतीयाऽपि दृश्यते, तेण कालेण तेण समएण (तस्मिन् क सस्मिन् समये) इत्यर्थः । प्रथमाया अपि द्वितीया दृश्यते, चउवी पि जिणवरा (चतुर्विंशतिरपि जिनवरा इत्यर्थ) ॥ इति का काणि ॥

# अथ तिङन्तप्रकरणम्

त्यादीनामाद्यत्रयस्याद्यस्येचेचौ ॥ ३ ॥ १३९ ॥

त्यादीना विभक्तीना परस्मैपदानाम् आत्मनेपदाना च सम्बन्धिनः प्रथमत्रयस्य यदाद्य वचन तस्य स्थाने इच् एच् इत्यादेशौ भवत', चकारौ इचे च. ॥ ४ ॥ ३१८ ॥ इत्यत्र विशेषणार्थौ, हस् इ इतिस्थिते ॥

व्यञ्जनाददन्ते ॥ ४ ॥ २३९ ॥

व्यञ्जनान्ताद् धातोरन्ते अकारो भवति, हसइ हसए, भमइ कुणइ चुम्बइ भणइ उपसमइ पावइ सिंचइ रुन्धइ मुसइ हरइ करइ, शबादीनां च प्रायः प्रयोगो नास्ति ॥

बहुष्वाद्यस्य न्तिन्तेइरे ॥ ३ ॥ १४२ ॥

त्यादीना परस्मैपदानाम् आत्मनेपदानाम् आद्यत्रयस्य सम्बन्धिनो बहुषु वर्त्तमानस्य वचनस्य स्थाने न्ति न्ते इरे इत्यादेशा भवन्ति ॥ हसन्ति वेवन्ति, हसिज्जन्ति[3], रमिज्जन्ति, 'गज्जन्ते खे मेहा, बीहन्ते रक्खसाण च, उप्पज्जन्ते कइहिअयसायरे कव्वरयणाइ, दोण्णि वि न पहुप्पिरे बाहू, न प्रभवत इत्यर्थ., विच्छुहिरे, विक्षुभ्यन्तीत्यर्थ. ॥ क्वचिद् इरे एकत्वेऽपि, सुसइरे गामचिक्खल्लो, शुष्यतीत्यर्थ ॥

---

१ कृगे कुण ॥ ४ ॥ ६५ ॥ इति करोतेः कुणादेशः ॥ २ ऋवर्णस्यारः ॥ ४ ॥ २३४ ॥ इति ऋकारस्य स्थाने अरादेशः ॥ ३ ईअइज्जौ क्यस्य ॥ ३ ॥ १६० ॥ इति क्यस्य इज्जादेशः ॥

द्वितीयस्य सि से ॥ ३ ॥ १४० ॥

त्यादीनां परस्मैपदानाम् आत्मनेपदानां च द्वितीयस्य त्रयस्य सम्बन्धिन आद्यवचनस्य स्थाने सि से इत्यादेशौ भवतः ॥ हससे वेवसि वेवसे ॥

अत एवैच्से ॥ ३ ॥ १४५ ॥

त्यादेः स्थाने यौ एच् से इत्यादेशावुक्तौ तौ अकारान्तादेव भवतो नान्यस्मात् ॥ हसए हससे तुवरए, तुवरसे, करए करसे अत इति किम्, ठाइ, ठासि, वसुआइ, वसुआसि, होई एवकारोऽकारान्ताद् एच् से एव भवतः, इति विपरीतावधारण निषेधार्थं, तेन अकारान्ताद् इच् सि इत्येतावपि सिद्धौ, हस हससि वेवइ वेवसि ॥

मध्यमस्येत्थाहचौ ॥ ३ ॥ १४३ ॥

त्यादीनां परस्मैपदात्मनेपदानां मध्यमत्रयस्य बहुषु वर्तमान स्थाने इत्था हच इत्यादेशौ भवतः ॥ हसित्था हसह वेवित्था वेवह, बहुलाधिकारात् इत्था अन्यत्रापि (यद्यद् ते रोचते) ज ते रोइत्था, हच् इति चकारः, इहहचोर्हस्य ॥ ४ ॥ २६८ ॥ इत्यत्र विशेषणार्थः ॥

तृतीयस्य मिः ॥ ३ ॥ १४१ ॥

त्यादीनां परस्मैपदानामात्मनेपदानां च तृतीयस्य त्रयस्याद्यस्य वचनस्य स्थाने मिरादेशो भवति ॥

---

१ त्वरस्तुवर-जयडौ ॥ ४ ॥ १७० ॥ इति त्वरस्तुवरादेश ॥ २ भुवेर्होहुवर या ॥ ४ ॥ ६० ॥ इति भूधातोर्हो आदेश ॥

### मो वा ॥ ३ ॥ १५४ ॥

अत आ इति वर्त्तते, अदन्ताद् धातोर्मौ परे अत आत्त्व वा भवति ॥ हसामि हसमि, वेवामि वेवमि, बहुलाधिकाराद् मित्रेः स्थानीयस्य मेरिकारलोपश्च वहु जाणय रूसिउ सक, शक्नोमीत्यर्थे. ॥ न मर (न म्रिये इत्यर्थ.)॥

### तृतीयस्य मोमुमाः ॥ ३ ॥ १४४ ॥

त्यादीना परस्मैपदात्मनेपदानां तृतीयस्य त्रयस्य सम्बन्धिनो बहुपु वर्तमानस्य वचनस्य स्थाने मोमुम इत्येते आदेशा भवन्ति ॥

### इच मोमुमे वा ॥ ३ ॥ १५५ ॥

अकारान्ताद् धातो' परेपु मोमुमेपु अत इत्त्व चकाराद् आत्त्व च वा भवतः ॥ हसिमो हसामो हसमो, वेविमो वेवामो वेवमो, हसिमु हसामु हसमु, वेविमु, वेवामु वेवमु, हसिम हसाम हसम, वेविम वेवाम वेवम ॥ वर्त्तमानपञ्चमीशतृपु वा ॥ ३ ॥ १५८ ॥ इत्येत्त्वे तु, हसेमो हसेमु हसेम, वेवेमो वेवेमु वेवेम, अत इत्येव ठामो होमो ॥

### अत्थिस्त्यादिना ॥ ३ ॥ १४८ ॥

अस्तेः स्थाने त्यादिभि' सह अत्थि इत्यादेशो भवति, पुरुषवचने न विवक्षते, अत्थि सो, अत्थि ते, अत्थि तुव, अत्थि तुम्हे अत्थि अह, अत्थि अम्हे ॥

### सिनाऽस्ते सि' ॥ ३ ॥ १४६ ॥

सिना द्वितीयत्रिकादेशेन सह अस्तेः सिरादेशो भवति ॥ निट्ठुरो ज सि, सिना इति किम्, से आदेशे अत्थि तुम ॥

मिमोमैर्म्हिम्होम्हा वा ॥ ३ ॥ १४७ ॥

अस्तेर्धातो स्थाने मिमोम इत्यादशैः सह यथासंख्य म्हि म्हो म्ह इत्यादेशा भवन्ति ॥ एस म्हि, (एषोऽस्मीत्यर्थः) गय म्हो, ग म्ह ॥ मुकारस्याग्रहणादप्रयोग एव तस्य इत्यवमीयते, पक्षे अ अम्हे ॥ ननु च सिद्धावस्थायां पक्ष्मश्मष्मस्मह्मां म्हः, ॥ २ ॥ ७४ इत्यनेनैव म्हादेशे म्हो इति सिध्यति ? सत्य किन्तु विभक्तिवि प्रायः साध्यमानावस्थाङ्गी क्रियते, अन्यथा वच्छेण वच्छेसु जे ते के इत्याद्यर्थं सूत्राणि नारम्भणीयानि स्युः ॥

भविष्यति हिरादिः ॥ ३ ॥ १६६ ॥

भविष्यदर्थे विहिते प्रत्यये परे तस्यैव आदि-र्हि प्रयोक्तव्य होहिइ, भविष्यति भविता वेत्यर्थः, एव होहिन्ति होहि होहित्था होहिह ॥

मिमोमुमे स्साहा नवा ॥ ३ ॥ १६७ ॥

भविष्यत्यर्थे मिमोमुमेषु तृतीयत्रिकादेशेषु परेषु तेषामेव आदे स्सा हा इत्येतौ वा प्रयोक्तव्यौ, हेरपवादौ, पक्षेहिरपि होस्सा होहामि, होस्सामो होहामो, होस्सामु होहामु, होस्साम होहाम पक्षे होहिमि होहिमो होहिमु होहिम, क्वचित्तु हा न भवति हसिस्सामो हसिहिमो ॥

मे. स्सं ॥ ३ ॥ १६९ ॥

धातोः परो भविष्यति काले म्यादेशस्य स्थाने स्सं वा प्रयो क्तव्यः, होस्सं, हसिस्सं, कित्तइस्सं. पक्षे होहिमि, होस्सामि होहामि, कित्तइहिमि ॥

श्रु गमि रुदि विदि दृशि मुचि वचि छिदि भिदि भुजां सोच्छ गच्छ रोच्छ वेच्छ दच्छ मोच्छ वोच्छ छेच्छ भेच्छ भोच्छ ॥ ३ ॥ १७१ ॥

श्रुवादीनां धातूनां भविष्यद्विहितस्यन्तानां स्थाने सोच्छम् इत्यादयो वा निपात्यन्ते, सोच्छ (श्रोष्यामि) गच्छ (गमिष्यामि) संगच्छ (संगस्ये) रोच्छ (रोदिष्यामि) विद ज्ञाने, वेच्छ (वेदिष्यामि) दच्छ (द्रक्ष्यामि) मोच्छ (मोक्ष्यामि) वोच्छ (वक्ष्यामि) छेच्छ (छेत्स्यामि) भेच्छ (भेत्स्यामि) भोच्छ (भोक्ष्ये)

सोच्छादय इजादिषु हिलुक् च वा ॥ ३ ॥ १७२ ॥

श्रुवादीनां स्थाने इजादिषु भविष्यदादेशेषु यथासंख्यं सोच्छादयो भवन्ति ॥ ते एव आदेशा अन्त्यस्वरावयववर्ज्या इत्यर्थः[7], हिलुक् च वा भवति, सोच्छिइ पक्षे सोच्छिहिइ, एवं सोच्छिंति सोच्छिहिंति, सोच्छिसि सोच्छिहिसि, सोच्छित्था सोच्छिहित्था, सोच्छिह सोच्छिहिह, सोच्छिमि सोच्छिहिमि सोच्छिस्सामि, सोच्छिहामि, सोच्छिस्स, सोच्छं, सोच्छिमो, सोच्छिहिमो, सोच्छिस्सामो, सोच्छिहामो, सोच्छिहिस्सा, सोच्छिहित्था ॥ एवमुभयोरपि, गच्छिइ, गच्छिहिइ, गच्छिंति, गच्छिहिन्ति, गच्छिसि, गच्छिहिसि, गच्छित्था, गच्छिहित्था, गच्छिह, गच्छिहिह, गच्छिमि, गच्छिहिमि, गच्छिस्सामि, गच्छिहामि, गच्छिस्स, गच्छं, गच्छिमो, गच्छिहिमो, गच्छिस्सामो, गच्छिहामो,

---

७ पूर्वसूत्रे तु मिप्रत्ययेन सह आदेशाः, अत्र तु इजादिप्रत्यय विनेय इति भावः ।
८ हिलुगभावपक्षे ॥

गच्छिहित्था, गच्छिहिस्सा ॥ एवं मुमयोरपि, एवं उदाहार्यम् ॥

**मोमुमानां हिस्सा हित्था ॥ ३ ॥ १६८ ॥**

धातौ परौ भविष्यति काले मोमुमानां स्थाने हिस्सा हित्था इत्येतौ वा प्रयोक्तव्यौ, होहिस्सा होहित्था, हसिहित्था हसिहिस्सा, पक्षे होहिमो होस्सामो होहामो इत्यादि ॥

**कृदो हं ॥ ३ ॥ १७० ॥**

करोतेर्ददातेश्च परो भविष्यति विहितस्य म्यादेशस्य स्थाने हं वा प्रयोक्तव्यः, काहं दाहं, करिष्यामि दास्यामीत्यर्थः ॥

**ज्जाज्जे ॥ ३ ॥ १५९ ॥**

ज्जाज्ज इत्यादेशयो. परयोरकारस्य एकारो भवति ॥

**वर्त्तमाना भविष्यन्त्योश्च ज्ज ज्जा वा ॥ ३ ॥ १७७ ॥**

वर्तमाना भविष्यन्त्योश्च विध्यादिषु च विहितस्य प्रत्ययस्य स्थाने ज्ज ज्जा इत्यादेशौ वा भवतः, पक्षे यथाप्राप्तम्, वर्तमाना हसेज्ज हसेज्जा, पढेज्ज पढेज्जा, सुणेज्ज सुणेज्जा, पक्षे हसइ, पढइ सुणइ ॥ (भविष्यन्ती) पढेज्ज पढेज्जा पक्षे पढिहिइ ॥ विध्यादिषु हसेज्ज हसेज्जा, हसतु हसेत् वा इत्यर्थः, पक्षे हसउ, एवं सर्वत्र यथा तृतीयत्रये, अइवाएज्जा, अइवायावेज्जा, 'न समणु जाणामि' न समणु जाणेज्जा वा, अन्ये तु अन्यासामपीच्छन्ति, होज्जा भवति भवेत् भवतु अभवत् अभूत् बभूव भूयात् भविता भविष्यति अभविष्यत् वेत्यर्थः ॥

मध्ये च स्वरान्ताद्वा ॥ ३ ॥ १७८ ॥

स्वरान्ताद् धातो[1] प्रकृतिप्रत्यययोर्मध्ये, चकारात् प्रत्ययाना स्थाने ज ज्जा इत्येतौ वा भवतः, वर्तमाना–भविष्यन्त्योर्विध्यादिपु च, (वर्तमाना।) होज्जइ होज्जाइ होज्ज होज्जा, पक्षे होइ, एंव होज्जसि होज्जासि होज्ज होज्जा, होसि इत्यादि, (भविष्यन्ती) होज्जहिइ होज्जाहिइ, होज्ज होज्जा, पक्षे होहिइ, एव होज्जहिसि, होज्जाहिसि, होज्ज होज्जा, होहिसि, होज्जहिमि होज्जाहिमि होज्जस्सामि होज्जहामि होज्जस्स होज्ज होज्जा इत्यादि (विध्यादिपु) होज्जउ होज्जाउ होज्ज होज्जा 'भवतु भवेद्वा इत्यर्थ.' पक्षे होउ, स्वरान्तादिति किम्, हसेज्ज हसेज्जा, तुवरेज्ज तुवरेज्जा ॥

सी ही हीअ भूतार्थस्य ॥ ३ ॥ १६२ ॥

भूतेऽर्थे विहितोऽद्यतनादिप्रत्ययो भूतार्थ' तस्य स्थाने सी ही हीअ इत्यादेशा भवन्ति, उत्तरत्र व्यञ्जनादीअ विधानात् स्वरान्तादेवाऽय विधि., कासी काही काहीअ, अकार्षीत् अकरोत् चकार वेत्यर्थः ॥ एव ठासी ठाही ठाहीअ, आर्षे 'देविन्दो इणमब्बवी, इत्यादौ सिद्धावस्थाश्रयणात् ह्यस्तन्याः प्रयोगः ॥

व्यञ्जनादीअ' ॥ ३ ॥ १६३ ॥

व्यञ्जनान्ताद् धातोः परस्य भूतार्थस्य अद्यतनादिप्रत्ययस्य ईअ इत्यादेशो भवति, हुवीअ, अभूत् अभवत् बभूव वेत्यर्थ.,

---

१ वत्तमानकालिकमध्यमस्य उदाहरणम् दर्शयति, होज्जसीत्यादि ॥ २ मिमोमुमे म्हा न्हा ॥ ३ ॥ १६७ ॥ इति मे स्साहा आगमौ ॥ ३ मे स्सं ॥ ३ ॥ १६९ ॥ इति मे स्थाने स्सआदेश ॥

एवम् अच्छीअ आसिष्ट आस्त आसांचक्रे वा, गेण्हीअ अगृण्हात् जग्राह वा ॥

तेनास्ते रास्यहेसी ॥ ३ ॥ १६४ ॥

अस्ते–र्धातोस्तेन भूतार्थेन प्रत्ययेन सह आसि अहेसि इत्यादेशौ भवतः, आसि सो तुम अह वा, जे आसि ये आसन्नित्यर्थः, एवम् अहेसि ॥

दुसुमु विध्यादिष्वेकस्मिंस्त्रयाणाम् ॥ ३ ॥ १७३ ॥

विध्यादिष्वर्थेषु उत्पन्नानाम् एकत्वेऽर्थे वर्तमानानां त्रयाणामपि त्रिकाणां स्थाने यथासंख्य दुसुमु इत्येते आदेशा भवन्ति, हसउ सा, हससु तुम, हसामु अह ॥ पेच्छउ, पेच्छसु, पेच्छामु दकारोच्चारणं भाषान्तरार्थम् ॥

सोर्हिर्वा ॥ ३ ॥ १७४ ॥

पूर्वसूत्रविहितस्य सोः स्थाने हिरादेशो वा भवति, [1]देहि देसु ॥

अत इज्जस्विज्जहीज्जे लुको वा ॥ ३ ॥ १७५ ॥

अकारात् परस्य सो इज्जसु इज्जहि इज्जे इत्येते लुक् च आदेशा वा भवन्ति, हसेज्जसु हसेज्जहि हसेज्जे हस, पक्षे हसहु, अत इति किम् होसु ठाहि ॥

बहुषु न्तुहमो ॥ ३ ॥ १७६ ॥

विध्यादिषूत्पन्नानां बहुष्वर्थेषु वर्तमानाना त्रयाणां त्रिकाणां स्थाने यथासंख्य न्तुहमो इत्यादेशा भवन्ति, हसन्तु, (हसन्तु हसेयुर्वा,) हसह (हसत हसेत वा) हसामो (हसाम हसेम वा) एव तुवरन्तु तुवरह तुवरामो,

---

1 स्वराणां स्वरा ॥ ४ ॥ २३८ ॥ इत्याकारस्य एत्वम् ॥

